# मुहूर्त्तचिन्तामणिः

गौरीश्रवःकेतकपत्रभङ्गमाकृष्य हस्तेन ददन्मुखाग्रे
विघ्नं मुहूर्ताकलितद्वितीयदन्तप्ररोहो हरतु द्विपास्यः १

क्रियाकलापप्रतिपत्तिहेतुं संक्षिप्तसारार्थविलासगर्भम्
अनन्तदैवज्ञसुतः स रामो मुहूर्तचिन्तामणिमातनोति २

## शुभाशुभप्रकरणम् १

तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः
शिवो दुर्गाऽन्तको विश्वे हरिः कामः शिवः शशी ३

नन्दा च भद्रा च जया च रिक्ता पूर्णेति तिथ्योऽशुभमध्यशस्ताः
सितेऽसिते शस्तसमाधमाः स्युः सितज्ञभौमार्किगुरौ च सिद्धाः ४

नन्दा भद्रा नन्दिकाख्या जया च रिक्ता भद्रा पूर्णसञ्ज्ञा मृताऽर्कात्
याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठाऽऽर्यम्णं ज्येष्ठाऽन्त्यं रवेर्दग्धभं स्यात् ५

षष्ठ्यादितिथयो मन्दाद्विलोमं प्रतिपद्बुधे
सप्तम्यर्केऽधमाः षष्ठ्याद्यामाश्च रदधावने ६

षष्ठ्यष्टमी भूतविधुक्षयेषु नो सेवेत ना तैलपले क्षुरं रतम्
नाभ्यञ्जनं विश्वदशद्विके तिथौ धात्रीफलैः स्नानममाद्रिगोष्वसत् ७

सूर्येशपञ्चाग्निरसाष्टनन्दा वेदाङ्गसप्ताश्विगजाङ्कशैलाः
सूर्याङ्गसप्तोरगगोदिगीशा दग्धा विषाख्याश्च हुताशनाश्च ८

सूर्यादिवारे तिथयो भवन्ति मघाविशाखाशिवमूलवह्निः
ब्राह्मं करोऽर्काद्यमघण्टकाश्च शुभे विवर्ज्या गमने त्ववश्यम् ९

भाद्रे चन्द्रदृशौ नभस्यनलनेत्रे माधवे द्वादशी

पौषे वेदशरा इषे दशशिवा मार्गेऽद्रिनागा मधौ
गोष्टौ चोभयपक्षगाश्च तिथयः शून्या बुधैः कीर्तिता
ऊर्जाषाढतपस्यशुक्रतपसां कृष्णे शराङ्गाब्धयः १०

शक्राः पञ्च सिते शक्राद्र्यग्निविश्वरसाः क्रमात्
तथा निन्द्यं शुभे सार्पं द्वादश्यां वैश्वमादिमे ११

अनुराधा द्वितीयायां पञ्चम्यां पित्र्यभं तथा
त्र्युत्तराश्च तृतीयायामेकादश्यां च रोहिणी १२

स्वातीचित्रे त्रयोदश्यां सप्तम्यां हस्तराक्षसे
नवम्यां कृत्तिकाऽष्टम्यां पूभा षष्ठ्यां च रोहिणी १३

कदास्त्रभे त्वाष्ट्रवायू विश्वेज्यौ भगवासवौ
वैश्वश्रुती पाशिपौष्णे अजपादग्निपित्र्यभे १४

चित्राद्वीशौ शिवाश्वयर्काः श्रुतिमूले यमेन्द्रभे
चैत्रादिमासे शून्याख्यास्तारा वित्तविनाशदाः १५

घटो झषो गौर्मिथुनं मेषकन्यालितौलिनः
धनुः कर्को मृगः सिंहश्चैत्रादौ शून्यराशयः १६

पक्षादितस्त्वोजतिथौ घटैणौ मृगेन्द्रनक्रौ मिथुनाङ्गने च
चापेन्दुभे कर्कहरी हयान्त्यौ गोन्त्यौ च नेष्टे तिथिशून्यलग्ने १७

तिथयो मासशून्याश्च शून्यलग्नानि यान्यपि
मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु तु १८

पङ्ग्वन्धकाणलग्नानि मासशून्याश्च राशयः
गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः १९

वर्जयेत्सर्वकार्येषु हस्तार्कं पञ्चमीतिथौ
भौमाश्विनीं च सप्तम्यां षष्ठ्यां चन्द्रैन्दवं तथा २०

बुधानुराधाष्टम्यां दशम्यां भृगुरेवतीम्
नवम्यां गुरुपुष्यं चैकादश्यां शनिरोहिणीम् २१

गृहप्रवेशे यात्रायां विवाहे च यथाक्रमम्
भौमेऽश्विनीं शनौ ब्राह्मं गुरौ पुष्यं विवर्ज्जयेत् २२

आनन्दाख्यः कालदण्डश्च धूम्रो धाता सौम्यो ध्वांक्षकेतू क्रमेण
श्रीवत्साख्यो वज्रकं मुद्गरश्च च्छत्रं मित्रं मानसं पद्मलुम्बौ २३

उत्पातमृत्यू किल काणसिद्धी शुभोऽमृताख्यो मुसलं गदश्च
मातङ्गरक्षश्चरसुस्थिराख्यप्रवर्धमानाः फलदाः स्वनाम्ना २४

दास्रादर्के मृगादिन्दौ सार्पाद्भौमे कराद्बुधे
मैत्राद्गुरौ भृगौ वैश्वाद्गण्या मन्दे च वारुणात् २५

ध्वांक्षे वज्रे मुद्गरे चेषुनाड्यो वर्ज्या वेदाः पद्मलुम्बे गदेऽश्वाः
धूम्रे काणे मौसले भूर्द्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे २६

सूर्यभाद्वेदगोतर्कदिग्विश्वनखसम्मिते
चन्द्रर्क्षे रवियोगाः स्युर्दोषसङ्घविनाशकाः २७

सूर्येऽर्कमूलोत्तरपुष्यदास्रं चन्द्रे श्रुतिब्राह्मशशीज्यमैत्रम्
भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पं ज्ञे ब्राह्ममैत्रार्ककृशानुचान्द्रम् २८

जीवेऽन्त्यमैत्राश्व्यदितीज्यधिष्ण्यं शुक्रेऽन्त्यमैत्राश्व्यदितिश्रवोभम्
शनौ श्रुतिब्राह्मसमीरभानि सर्वार्थसिद्ध्यै कथितानि पूर्वैः २९

द्वीशात्तोयाद्वासवात्पौष्णभाच्च ब्राह्मात्पुष्यादर्यमर्क्षाच्चतुर्भैः

स्यादुत्पातो मृत्युकाणौ च सिद्धिर्वा रेऽर्काद्ये तत्फलं नामतुल्यम् ३०

कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः
हूणबङ्गखशेष्वेव वर्ज्यास्त्रितयजास्तथा ३१

सर्वस्मिन्विधुपापयुक्तनुलवावर्धे निशाह्नोर्घटी
त्र्यंशं वै कुनवांशकं ग्रहणतः पूर्वं दिनानां त्रयम्
उत्पातग्रहतोऽद्र्यहाँश्च शुभदोत्पातैश्च दुष्टं दिनं
षण्मासं ग्रहभिन्नभं त्यज शुभे यौद्धं तथोत्पातभम् ३२

नेष्टं ग्रहर्क्षं सकलार्धपादग्रासे क्रमात्तर्कगुणेन्दुमासान्
पूर्वं परस्तादुभयोस्त्रिघस्रा ग्रस्तेऽस्तगे वाभुदितेऽर्धखण्डे ३३

जन्मर्क्षमासतिथयो व्यतिपातभद्रावैधृत्यमापितृदिनानि तिथिक्षयर्द्धी
न्यूनाधिमासकुलिकप्रहरार्द्धपाता विष्कम्भवज्रघटिकात्रयमेव वर्ज्यम् ३४

परिघार्धं पञ्च शूले षट् च गण्डातिगण्डयोः
व्याघाते नव नाड्यश्च वर्ज्याः सर्वेषु कर्मसु ३५

वेदाङ्गाष्टनवार्केन्द्रपक्षरन्ध्रतिथौ त्यजेत्
वस्वङ्कमनुतत्त्वाशाः शरा नाडीः पराः शुभाः ३६

कुलिकः कालवेला च यमघण्टश्च कण्टकः
वारादिद्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणाः ३७

सूर्ये षट्स्वर नागदिङ्मनुमिताश्चन्द्रेऽब्धिषट् कुञ्जरा
ङ्कार्काविश्वपुरन्दराः क्षितिसुते द्व्यब्ध्यग्नितर्का दिशः
सौम्ये द्व्यब्धिगजाङ्कदिङ्मनुमिता जीवे द्विषड्भास्कराः
शक्राख्यास्तिथयः कलाश्च भृगुजे वेदेषुतर्क ग्रहाः ३८

दिग्भास्करा मनुमिताश्च शनौ शशिद्वि

नागा दिशो भवदिवाकरसम्मिताश्च
दुष्टक्षणः कुलिककण्टककालवेलाः
स्युश्चार्द्धयामयमघण्टगताः कलांशः ३९

विपाशेरावतीतीरे शुतुद्रवाश्च त्रिपुष्करे
विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकम् ४०

मृत्युक्रकचदग्धादीनिन्दौ शस्ते शुभाञ् जगुः
केचिद्यामोत्तरञ्चान्ये यात्रायामेव निन्दितान् ४१

अयोगे सुयोगोऽपि चेत् स्यात्तदानीमयोगं निहत्यैष सिद्धिं तनोति
परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तम् ४२

शुक्ले पूर्वार्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे
कृष्णेऽन्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः ४३

पञ्चद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा
विष्टेरास्यमसद्गजेन्दुरसरामाद्र्यश्वबाणाब्धिषु
यामेष्वन्त्यघटीत्रयं शुभकरं पुच्छं तथा वासरे
विष्टिस्तिथ्यपरार्धजा शुभकरी रात्रौ तु पूर्वार्धजा ४४

कुम्भकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्त्रयेऽलिगे
स्त्रीधनुर्जूकनक्रेऽधो भद्रा तत्रैव तत्फलम् ४५

वाप्यारामतडागकूपभवनारम्भप्रतिष्ठे व्रता
ऽऽरम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके
गोदानाग्रयणप्रपाप्रथमकोपाकर्म वेदव्रतं
नीलोद्वाहमथातिपन्नशिशुसंस्कारान् सुरस्थापनम् ४६

दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं
संन्यासाग्निपरिग्रहौ नृपतिसन्दर्शाऽभिषेकौ गमम्

चातुर्मास्यसमावृती श्रवणयोर्वेधं परीक्षां त्यजेद्
वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ४७

अस्ते वर्ज्यं सिंहनक्रस्थजीवे वर्ज्यं केचिद्वक्रगे चातिचारे
गुर्वादित्ये विश्वघस्रेऽपि पक्षे प्रोचुस्तद्वद्दन्तरत्नादिभूषाम् ४८

सिंहे गुरौ सिंहलवे विवाहो नेष्टोऽथ गोदोत्तरतश्च यावत्
भागीरथीयाम्यतटं हि दोषो नान्यत्र देशे तपनेऽपि मेषे ४९

मघादिपञ्चपादेषु गुरुः सर्वत्र निन्दितः
गङ्गागोदान्तरं हित्वा शेषाङ्घ्रिषु न दोषकृत् ५०

मेषेऽर्के सन् व्रतोद्वाहो गङ्गागोदान्तरेऽपि च
सर्वः सिंहगुरुर्वर्ज्यः कलिङ्गे गौडगुर्जरे ५१

रेवापूर्वे गण्डकीपश्चिमे च शोणस्योदग्दक्षिने नीच इज्यः
वर्ज्यो नायं कौङ्कणे मागधे च गौडे सिन्धौ वर्जनीयः शुभेषु ५२

गोजान्त्यकुम्भेतरभेऽतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः
तदा विलुप्ताब्द इहातिनिन्दितः शुभेषु रेवासुरनिम्नगान्तरे ५३

पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयो दिनार्धतः
ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्ध्वं तथाऽधो दिनपप्रवेशनम् ५४

वारादेर्घटिका द्विघ्नाः स्वाक्षहृच्छेषवर्जिताः
सैकास्तष्टा नगैः कालहोरेशा दिनपात् क्रमात् ५५

वारे प्रोक्तं कालहोरासु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य
कुर्याद्दिक्छूलादि चिन्त्यं क्षणेषु नैवोल्लंध्यः पारिघश्चापि दण्डः ५६

मन्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी

ज्येष्ठेऽन्त्ये च तिथिस्त्विषे नव तपस्यश्वाः सहस्ये शिवाः
भाद्रेऽग्निश्च सिते त्वमाष्टनभसः कृष्णे युगाद्याः सिते
गोऽग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ५७

शुभाशुभप्रकरणं समाप्तम् १

अथ नक्षत्रप्रकरणम् २

नासत्याऽन्तकवह्निधातृशशभृद्रुद्रादितीज्योरगा
ऋक्षेशाः पितरो भगोऽर्यमरवी त्वष्टा समीरः क्रमात्
शक्राग्नी खलु मित्र इन्द्रनिर्ऋृतिक्षीराणि विश्वे विधि
र्गोविन्दो वसुतोयपाऽजचरणाऽहिर्बुध्न्यपूषाभिधाः १

उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्
तत्र स्थिरं बीजगेहशान्त्यारामादि सिद्धये २

स्वात्यादित्ये श्रुतेस्त्रीणि चन्द्रश्चापि चरं चलम्
तस्मिन् गजादिकारोहो वाटिकागमनादिकम् ३

पूर्वात्रियं याम्यमघे उग्रं क्रूरं कुजस्तथा
तस्मिन् घाताग्निशाठ्यानि विषशस्त्रादि सिद्ध्यति ४

विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतम्
तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादि सिद्ध्यति ५

हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा
तस्मिन् पण्यरतिज्ञानं भूषाशिल्पकलादिकम् ६

मृगान्त्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा
तत्र गीताम्बरक्रीडा मित्रकार्यं विभूषणम् ७

मूलेन्द्रार्द्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम्
तत्राभिचारघातोग्रभेदाः पशुदमादिकम् ८

मूलाहिमिश्रोग्रमघोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम्
तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृशकृत्यमेषु सत् ९

पौष्णध्रुवाश्विकरपञ्चकवासवेज्या
दित्ये प्रवालरदशङ्खसुवर्णवस्त्रम्
धार्यं विरक्तशनिचन्द्रकुजेऽह्नि रक्तं
भौमे ध्रुवादितियुगे सुभगा न दध्यात् १०

वस्त्राणां नवभागकेषु च चतुष्कोणेऽमरा राक्षसा
मध्यत्र्यंशगता नरास्तु सदशे पाशे च मध्यांशयाः
दग्धे वा स्फुटितेऽम्बरे नवतरे पङ्कादिलिप्ते न स
द्रक्षोंऽशे नृसुरांशयोः शुभमसत्सर्वांशके प्रान्ततः ११

विप्राज्ञया तथोद्वाहे राज्ञा प्रीत्याऽर्पितञ्च यत्
निन्द्येऽपि धिष्ण्ये वारादौ वस्त्रं धार्यं जगुर्बुधाः १२

राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपा
रोपोऽथो नृपदर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः
तीक्ष्णोग्राम्बुपभेषु मद्यमुदितं क्षिप्रान्त्यवह्नीन्द्रमा
दित्येन्द्राम्बुपवासवेषु हि गवां शस्तः क्रयो विक्रयः १३

लग्ने शुभे चाष्टमशुद्धिसंयुते रक्षा पशूनां निजयोनिभे चरे
रिक्ताऽष्टमीदर्शकुजश्रवोध्रुवत्वाष्ट्रेषु यानं स्थितिवेशनं न सत् १४

भैषज्यं सल्लघुमृदुचरे मूलभे द्व्यङ्गलग्ने
शुक्रेन्दिज्ये विदि च दिवसे चापि तेषां रवेश्च
शुद्धे रिष्फद्युनमृतिगृहे सत्तिथौ नो जनेर्भे
सूचीकर्माऽप्यदितिवसुभत्वाष्ट्रमित्राश्विपुष्ये १५

क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न
पौष्णाम्बुपाश्विनीवातश्रवश्चित्राः क्रये शुभाः १६

पूर्वाद्वीशकृशानुसार्पयमभे केन्द्रद्विकोणे शुभैः
षट्त्र्यायेष्वशुभैर्विना घटतनुं सन्विक्रयः सत्तिथौ
रिक्ताभौमघटान्विना च विपणिर्मित्रध्रुवन्क्षिप्रभै
र्लग्ने चन्द्रसिते व्ययाष्टरहितैः पापैः शुभैर्द्व्यायखे १७

क्षिप्रान्त्यवस्विन्दुमरुञ्जलेशादित्येष्वरक्तारदिने प्रशस्तम्
स्याद्वाजिकृत्त्यं त्वथ हस्तिकार्यं कुर्यान्मृदुक्षिप्रचरेषु विद्वान् १८

स्याद् भूषाघटनं त्रिपुष्करचरक्षिप्रध्रुवे रत्नयुक्
तत्तीक्ष्णोग्रविहीनभे रविकुजे मेषालिसिंहे तनौ
तन्मुक्तासहितं चरध्रुवमृदुक्षिप्रे शुभे सत्तनौ
तीक्ष्णोग्राश्विमृगे द्विदैवदहने शस्त्रं शुभं घट्टितम् १९

मुद्राणां पातनं सद्ध्रुवमृदुचरभक्षिप्रभैर्वीन्दुसौरे
घस्रे पूर्णाजयाख्ये न च गुरुभृगुजास्ते विलग्ने शुभैः स्यात्
वस्त्राणां क्षालनं सद्वसुहयदिनकृत्पञ्चकादित्यपुष्ये
नो रिक्तापर्वषष्ठीपितृदिनरविजज्ञेषु कार्यं कदापि २०

सन्धार्याः कुन्तवर्मेष्वसनशरकृपाणासिपुत्र्यो विरिक्ते
शुक्रेज्यार्केऽह्नि मैत्रध्रुवलघुसहितादित्यशाक्रद्विदैवे
स्युर्लग्नेऽपि स्थिराख्ये शशिनि च शुभदृष्टे शुभैः केन्द्रगैः स्या
द्भोगः शय्यासनादेर्ध्रुवमृदुलघुहर्यन्तकादित्य इष्टः २१

अन्धाक्षं वसुपुष्यधातृजलभद्वीशार्यमान्त्याभिधं
मन्दाक्षं रविविश्वमित्रजलपाश्लेषाश्विचान्द्रं भवेत्
मध्याक्षं शिवपित्रजैकचरणत्वाष्ट्रैन्द्रविध्यन्तकं
स्वक्षं स्वात्यदितिश्रवोदहनभाहिर्बुध्न्यरक्षो भगम् २२

विनष्टार्थस्य लाभोऽन्धे शीघ्रं मन्दे प्रयत्नतः
स्याद्दूरे श्रवणं मध्ये श्रुत्याप्ती न सुलोचने २३

तीक्ष्णमिश्रध्रुवोग्रैर्यद् द्रव्यं दत्तं निवेशितम्
प्रयुक्तं च विनष्टं च विष्टयां पाते च नाप्यते २४

मित्रार्कध्रुववासवाम्बुपमघातोयान्त्यपुष्येन्दुभिः
पापैर्हीनबलैस्तनौ सुरगुरौ ज्ञे वा भृगौ खे विधौ
आप्ये सर्वजलाशयस्य खननं व्यम्भोमघैः सेन्द्रभै
स्तैर्नृत्यं हिबुके शुभैस्तनुगृहे ज्ञेऽब्जे ज्ञराशौ शुभम् २५

क्षिप्रे मैत्रे वित्सितार्केज्यवारे सौम्ये लग्नेऽर्के कुजे वा खलाभे
योनेर्मैत्र्यां राशिपोश्चापि मैत्र्यां सेवा कार्या स्वामिनः सेवकेन २६

स्वात्यादित्यमृदुद्विदैवगुरुभे कर्णत्रयाश्वे चरे
लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्यप्रयोगः शुभः
नारे ग्राह्यमृणं तु संक्रमदिने वृद्धौ करेऽर्केऽह्नि यत्
तद्वंशेषु भवेदृणं न च बुधे देयं कदाचिद्धनम् २७

मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनाऽर्कं शनिं
पापैर्हीनबलैर्विधौ जललवे शुक्रे विधौ मांसले
लग्ने देवगुरौ हलप्रवहणं शस्तं न सिंहे घटे
कर्काजैणधटे तनौ क्षयकरं रिक्तासु षष्ठयां तथा २८

एतेषु श्रुतिवारुणादितिविशाखोडूनि भौमं विना
बीजोप्तिर्गदिता शुभा त्वगुभतोऽष्टाग्नीन्दुरामेन्दवः
रामेन्द्वग्नियुगान्यसच्छुभकराण्युप्तौ हलेऽर्कोज्झिताद्
भाद्रामाष्टनवाष्टभानि मुनिभिः प्रोक्तान्यसत्सन्ति च २९

त्वाष्ट्रान्मित्रकभाद् द्वयेऽम्बुपलघुश्रोत्रे शिरामोक्षणं
भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्की विना
मित्रक्षिप्रचरध्रुवे रविशुभाहे लग्नवर्गे विदो
जीवस्यापि तनौ गुरौ निगदिता धर्मक्रिया तद्बले ३०

तीक्ष्णाजपादकरवह्निवसुश्रुतीन्दु
स्वातीमघोत्तरजलान्तकतक्षपुष्ये
मन्दाररिक्तरहिते दिवसेऽतिशस्ता
धान्यच्छिदा निगदिता स्थिरभे विलग्ने ३१

भाग्यार्यमश्रुतिमघेन्द्रविधातृमूल
मैत्रान्त्यभेषु कथितं कणमर्दनं सत्
द्वीशाजपान्निर्ऋतिधातृशतार्यमर्क्षे
सस्यस्य रोपणमिहार्किकुजौ विना सत् ३२

मिश्रोग्ररौद्रभुजगेन्द्रविभिन्नभेषु
कर्काजतौलिरहिते च तनौ शुभाहे
धान्यस्थितिः शुभकरी गदिता ध्रुवेज्य
द्वीशेन्द्रदस्त्र चरभेषु च धान्यवृद्धिः ३३

क्षिप्रध्रुवान्त्यचरमैत्रमघासु शस्तं
स्याच्छान्तिकं च सह मङ्गलपौष्टिकाभ्याम्
खेऽर्के विधौ सुखगते तनुगे गुरौ नो
मौढ्यादिदुष्टसमये शुभदं निमित्ते ३४

सूर्यभात् त्रित्रिभे चान्द्रे सूर्यविच्छुक्रपङ्गवः
चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ३५

सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ३६

नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभम्
विना नन्दाविषघटीमधुपौषाऽर्किभूमिजान् ३७

याम्यत्रयविशाखेन्द्रसार्पपित्र्येशभिन्नभे
भृग्वीज्यार्कदिने नौकाघटनं सत्तनौ शुभम् ३८

मूलार्द्राभरणीपित्र्यमृगे सौम्ये घटे तनौ
सुखे शुक्रेऽष्टमे शुद्धे सिद्धिर्वीराभिचारयोः ३९

व्यन्त्यादितिध्रुवमघाऽनिलसार्पधिष्ण्ये
रिक्ते तिथौ चरतनौ विकवीन्दुवारे
स्नानं रुजा विरहितस्य जनस्य शस्तं
हीने विधौ खलखगैर्भवकेन्द्रकोणे ४०

मृदुध्रुवक्षिप्रचरे ज्ञे गुरौ वा खलघ्नगे
विधौ ज्ञजीववर्गस्थे शिल्पविद्या प्रशस्यते ४१

सुरेज्यमित्रभाग्येषु चाष्टम्यां तैतिले हरौ
शुक्रदृष्टतनौ सौम्यवारे सन्धानमिष्यते ४२

त्यक्त्वाऽष्टभूतशनिविष्टिकुजान् जनुर्भ
मासौ मृतौ रविविधू अपि भानि नाड्याः
द्व्यङ्गे चरे तनुलवे शशिजीवतारा
शुद्धौ करादितिहरीन्द्रकपे परीक्षा ४३

व्ययाष्टशुद्धोपचये लग्नगे शुभदृग्युते
चन्द्रे त्रिषड्दशायस्थे सर्वारम्भः प्रसिद्ध्यति ४४

स्वातीन्द्रपूर्वाशिवसार्पभे मृतिर्ज्वरेऽन्त्यमैत्रे स्थिरता भवेद्रुजः
याम्यश्रवोवारुणतक्षभे शिवा घस्रा हि पक्षो द्व्यधिपार्कवासवे ४५

मूलाग्निदास्रे नव पित्र्यभे नखा बुध्न्यार्यमेज्यादितिधातृभे नगाः
मासोऽब्जवैश्वेऽथ यमाहिमूलभे मिश्रेशपित्र्ये फणिदंशने मृतिः ४६

रौद्राहिशाक्राम्बुपयाम्यपूर्वाद्विदैववस्वग्निषु पापवारे
रिक्ताहरिस्कन्ददिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः ४७

द्विप्राहिमूलेन्दुहरीशवायुभे प्रेतक्रिया स्याज्झषकुम्भगे विधौ
प्रेतस्य दाहं यमदिग्गमं त्यजेच्छय्यावितानं गृहगोपनादि च ४८

सूर्यर्चाद्रसभैरधःस्थलगतैः पाको रसैः संयुतः
शीर्षे युग्ममितैः शवस्य दहनं मध्ये युगैः सर्पभीः
प्रागाशादिषु वेदभैः स्वसुहृदां स्यात्सङ्गमो रोगभीः
क्वाथादेः करणं सुखं च गदितं काष्ठादिसंस्थापने ४९

भद्रातिथि रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निवैश्वे
त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्वसुतच्चचान्द्रे ५०

शक्रारार्किषु दर्शभूतमदने नन्दासु तीच्णोग्रभे
पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने
याम्येऽब्दात्परतश्च पातपरिघे देवेज्यशुक्रास्तके
भद्रावैधृतयोः शवप्रतिकृतेर्दाहो न पत्ते सिते ५१

जन्मप्रत्यरितारयोर्मृतिसुखान्त्येऽब्जे च कर्तुर्न सन्
मध्यो मैत्रभगादितिध्रुवविशाखाद्व्यङ्घ्रिभे ज्ञेऽपि च
श्रेष्ठोऽर्केज्यविधोर्दिने श्रुतिकरस्वात्यश्विपुष्ये तथा
त्वाशौचात्परतो विचार्यमखिलं मध्ये यथासम्भवम् ५२

अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठान्त्यमूलादिभवं हि नारदः
वसिष्ठ एकद्विघटीमितं जगौ वृहस्पतिस्त्वेकघटीप्रमाणकम् ५३

अथोचुरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रान्तिमपञ्च नाड्यः
जातं शिशुं तत्र परित्यजेद्वा मुखं पितास्याष्टसमा न पश्येत् ५४

आद्ये पिता नाशमुपैति मूलपादे द्वितीये जननी वृतीये
धनं चतुर्थोऽस्य शुभोऽथ शान्त्या सर्वत्र सत्स्यादहिभे विलोमम् ५५

स्वर्गे शुचिप्रौष्ठपदेषमाघे भूमौ नभःकार्तिकचैत्रपौषे

मूलं ह्यधस्तात्तु तपस्यमार्गवैशाखशुक्रेष्वशुभं च तत्र  ५६

गराडान्तेन्द्रभशूलपातपरिघव्याघातगराडावमे
संक्रान्तिव्यतिपातवैधृतिसिनीवालीकुहूदर्शके
वज्रे कृष्णचतुर्दशीषु यमघराटे दग्धयोगे मृतौ
विष्टौ सोदरभे जनिर्न पितृभे शस्ता शुभा शान्तितः  ५७

त्रित्र्यङ्गपञ्चाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेन्दुभूकृताः
वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतं द्विद्विरदा भतारकाः  ५८

अश्वयादिरूपं तुरगास्ययोनिक्षुरोऽन एणास्यमणिर्गृहं च
पृषत्कचक्रे भवनं च मञ्चः शय्या करो मौक्तिकविद्रुमं च  ५९

तोरणं बलिनिभं च कुराडलं सिंहपुच्छगजदन्तमञ्चकाः
त्र्यस्त्रि च चित्ररणाभमर्दलौ वृत्तमञ्चयमलाभमर्दलाः  ६०

जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशाङ्कशुक्रे
दृश्ये मृदुक्षिप्रचरध्रुवे स्यात्पक्षे सिते स्वर्क्षतिथिक्षणे वा  ६१

रिक्तारवर्ज्ये दिवसेऽतिशस्ता शशाङ्कपापैस्त्रिभवाङ्गसंस्थैः
व्यन्त्याष्टगैः सत्खचरैर्मृगेन्द्रे सूर्यो घटे को युवतौ च विष्णुः  ६ २

शिवो नृयुग्मे द्वितनौ च देव्यः क्षुद्राश्चरे सर्व इमे स्थिरर्क्षे
पुष्ये ग्रहा विघ्नपयक्षसर्पभूतादयोऽन्त्ये श्रवणे जिनश्च  ६३
इति मुहूर्त्तचिन्तामणौ नक्षत्रप्रकरणम्  २

अथ सङ्क्रान्तिप्रकरणम्  ३

घोराऽर्कसङ्क्रमणमुग्ररवौ हि शूद्रान्
ध्वांक्षी विशो लघुविधौ च चरर्क्षभौमे
चौरान्महोदरयुता नृपतीन् ज्ञमैत्रे

मन्दाकिनी स्थिरगुरौ सुखयेच्च मन्दा १

विप्रांश्च मिश्रभभृगौ तु पशूंश्च मिश्र
तीक्ष्णार्कजेऽन्त्यजसुखा खलु राक्षसी च
त्र्यंशे दिनस्य नृपतीन् प्रथमे निहन्ति
मध्ये द्विजानपि विशोऽपरके च शूद्रान् २

अस्ते निशाप्रहरकेषु पिशाचकादी
न्नक्तञ्चरानपि नटान्पशुपालकांश्च
सूर्योदये सकललिङ्गिजनं च सौम्य
याम्यायनं मकरकर्कटतोर्निरुक्तम् ३

षडशीत्याननं चापनृयुक्कन्याझषे भवेत्
तुलाजौ विषुवं विष्णुपदं सिंहालिगोघटे ४

संक्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडश षोडशोष्णगोः
निशीथतोऽर्वागपरत्र संक्रमे पूर्वापराहान्तिमपूर्वभागयोः ५

पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्तात्
पूर्वं परस्ताद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये ६

सन्ध्या त्रिनाडीप्रमिताऽर्कविम्बादर्धोदितास्तादध ऊर्ध्वमत्र
चेद्याम्यसौम्ये अयने क्रमात्स्तः पुण्यौ तदानीं परपूर्वघस्रौ ७

याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः
षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः ८

तथाऽयनांशाः खरसाहताश्च स्पष्टार्कगत्या विहृता दिनाद्यैः
मेषादितः प्राक् चलसंक्रमाः स्युर्दाने जपादौ बहुपुण्यदास्ते ९

समं मृदुक्षिप्रवसुश्रवोऽग्निमघात्रिपूर्वास्त्रिपभं बृहत्स्यात्

ध्रुवद्विदैवादितिभं जघन्यं सार्पाम्बुपार्द्रानिलशाक्रयाम्यम् १०

जघन्यभे संक्रमणे मुहूर्ताः शरेन्दवो बाणकृता बृहत्सु
खरामसंख्याः समभे महर्घसमर्घसाम्यं विधुदर्शनेऽपि ११

अर्कादिवारे संक्रान्तौ कर्कस्याब्दविंशोपकाः
दिशो नखा गजाः सूर्या धृत्योऽष्टादश सायकाः १२

स्यात्तैतिले नागचतुष्पदे रविः सुप्तो निविष्टस्तु गरादिपञ्चके
किंस्तुघ्न ऊर्ध्वः शकुनौ सकौलवे नेष्टः समः श्रेष्ठ इहार्घवर्षणे १३

सिंहव्याघ्रवराहरासभगजा वाहद्विषद्घोटकाः
श्वाऽजो गौश्चरणायुधश्च बवतो वाहा रवेः संक्रमे
वस्त्रं श्वेतसुपीतहारितकपाण्ड्वारक्तकालासितं
चित्रं कम्बलदिग्घनाभमथ शस्त्रं स्याद्भुशुण्डी गदा १४

खड्गो दण्डशरासतोमरमथो कुन्तश्च पाशोऽङ्कुशो
ऽस्त्रं बाणस्त्वथ भक्ष्यमन्नपरमान्नं भैक्ष्यपक्वान्नकम्
दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथा शर्करा
ऽथो लेपो मृगनाभिकुङ्कुममथो पाटीरमृद्रोचनम् १५

यावश्चौतुमदो निशाञ्जनमथो कालागुरुश्चन्द्रको
जातिर्दैवतभूतसर्पविहगाः पश्वेणविप्रास्ततः
क्षत्रावैश्यकशूद्रसङ्करभवाः पुष्पं च पुन्नागकं
जातीबाकुलकेतकानि च तथा बिल्वार्कदूर्वाम्बुजम् १६

स्यान्मल्लिका पाटलिका जपा च संक्रान्तिवस्त्राशनवाहनादेः
नाशश्च तद्वृत्त्युपजीविनां च स्थितोपविष्टस्वपतां च नाशः १७

संक्रान्तिधिष्ण्याधरधिष्ण्यतस्त्रिभे स्वभे निरुक्तं गमनं ततोऽङ्गभे
सुखं त्रिभे पीडनमङ्गभेंऽशुकं त्रिभेऽर्थहानी रसभे धनागमः १८

नृपेक्षणं सर्वकृतिश्च सङ्गरः शास्त्रं विवाहो गमदीक्षणे रवेः
वीर्येऽथ ताराबलतो विधुर्विधोर्बलाद्रविस्तद्बलतःशुभाः परे १९

स्पष्टार्कसंक्रान्तिविहीन उक्तो मासोऽधिमासः क्षयमासकस्तु
द्विसंक्रमस्तत्र विभागयोः स्तस्तिथेर्हि मासौ प्रथमान्त्यसंज्ञौ २०

इति मुहूर्तचिन्तामणौ संक्रान्तिप्रकरणम् ३

अथ गोचरप्रकरणम् ४

सूर्यो रसान्त्ये खयुगेऽग्निनन्दे शिवाक्षयोर्भौमशनी तमश्च
रसाङ्कयोर्लाभशरे गुणान्त्ये चन्द्रोम्बराब्धौ गुणनन्दयोश्च १

लाभाष्टमे चाद्यशरे रसान्त्ये नगद्वये ज्ञो द्विशरेऽब्धिरामे
रसाङ्कयोर्नागविधौ खनागे लाभव्यये देवगुरुः शराब्धौ २

द्व्यन्त्ये नवांशेऽद्रिगुणे शिवाहौ शुक्रः कुनागे द्विनगेऽग्निरूपे
वेदाम्बरे पञ्चनिधौ गजेषौ नन्देशयोर्भानुरसे शिवाग्नौ ३

क्रमाच्छुभो विद्ध इति ग्रहः स्यात् पितुः सुतस्यात्र न वेधमाहुः
दुष्टोऽपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेऽब्जः ४

स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशितः सः
हिमाद्रिविन्ध्यान्तर एव वेधो न सर्वदेशेष्विति काश्यपोक्तिः ५

जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा
चिन्ता सौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशः सुखम्
लाभोपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगो
दानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ६

पापान्तः पापयुग्द्यूने पापाच्चन्द्रः शुभोऽप्यसन्
शुभांशे वाऽधिमित्रांशे गुरुदृष्टोऽशुभोऽपि सन् ७

सितासितादौ सद्दृष्टे चन्द्रे पक्षौ शुभावुभौ
व्यत्यासे चाशुभौ प्रोक्तौ सङ्कटेऽब्जबलं त्विदम् ८

वज्रं शुक्रेऽब्जे सुमुक्ता प्रबालं भौमेऽगौ गोमेदमार्कौ सुनीलम्
केतौ वैदूर्यं गुरौ पुष्पकं ज्ञे पाचिः प्राङ्माणिक्यमर्के तु मध्ये ९

माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं पुष्पकवज्रनीलम्
गोमेदवैदूर्यकमर्कतः स्यू रत्नान्यथो ज्ञस्य मुदे सुवर्णम् १०

धार्यं लाजावर्तकं राहुकेत्वो रौप्यं शुक्रेन्द्वोश्च मुक्ता गुरोस्तु
लोहं मन्दस्यारभान्वोः प्रवालं तारा जन्मर्क्षात् त्रिरावृत्तितः स्यात् ११

जन्माख्यसम्पद्विपदः क्षेमप्रत्यरिसाधकाः
वधमैत्राऽतिमैत्राः स्युस्तारा नामसदृक्फलाः १२

मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो
दद्यात्प्रत्यरितारकासु लवणं सर्वो विपत्प्रत्यरिः
मृत्युश्चादिमपर्यये न शुभदोऽथैषां द्वितीयेंऽशका
नादिप्रान्त्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः १३

षष्टिघ्नं गतभं भुक्तघटीयुक्तं युगाहतम्
शराब्धिहृल्लब्धतोऽर्कशेषेऽवस्थाः क्रियाद्विधोः १४

प्रवासनाशौ मरणं जयश्च हास्यारतिक्रीडितसुप्तभुक्ताः
ज्वराख्यकम्पस्थिरता अवस्था मेषात्क्रमान्नामसदृकफलाः स्युः १५

लाजाकुष्ठबलाप्रियङ्गुघनसिद्धार्थैर्निशादारुभिः
पुंखालोध्रयुतैर्जलैर्निगदितं स्नानं ग्रहोत्थाघहृत्
धेनुः कम्ब्वरुणो वृषश्च कनकं पीताम्बरं घोटकः
श्वेतो गौरसिता महासिरज इत्येता रवेर्दक्षिणाः १६

सूर्यारसौम्यास्फुजितोऽङ्कनागसप्ताद्रिघस्रान् विधुरग्निनाडीः
तमोयमेज्यास्त्रिरसाऽश्विमासान् गन्तव्यराशेः फलदाः पुरस्तात् १७

दुष्टे योगे हेम चन्द्रे च शङ्खं धान्यं तिथ्यर्धे तिथौ तण्डुलांश्च
वारे रत्नं भे च गां हेम नाड्यां दद्यात्सिन्धूत्थं च तारासु राजा १८

राश्यादिगौ रविकुजौ फलदौ सितेज्यौ
मध्ये सदा शशिसुतश्चरमेऽब्जमन्दौ
अध्वाऽन्नवह्निभयसन्मतिवस्त्रसौख्य
दुःखानि मासि जनिभे रविवासरादौ १९

इति मुहूर्त्तचिन्तामणौ गोचरप्रकरणम् ४

## अथ संस्कारप्रकरणम् ५

आद्यं रजः शुभं माघमार्गराधेषफाल्गुने
ज्येष्ठश्रावणयोः शुक्ले सद्वारे सत्तनौ दिवा १

श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौ सिताम्बरे
मध्यं च मूलादितिभे पितृमिश्रे परेष्वसत् २

भद्रानिद्रासंक्रमे दर्शरिक्तासन्ध्याषष्ठीद्वादशीवैधृतेषु
रोगेऽष्टम्यां चन्द्रसूर्योपरागे पाते चाद्यं नो रजोदर्शनं सत् ३

हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः
शाक्रान्वितैः शुभतिथौ शुभवासरे च
स्नायादथार्तववती मृगपौष्णवायु
हस्ताश्विधातृभिररं लभते च गर्भम् ४

गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलान्तकं
दास्रं पौष्णमघोपरागदिवसान् पातं तथा वैधृतिम्
पित्रोः श्राद्धदिनं दिवा च परिघाद्यर्धं स्वपत्नीगमे

भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम्  ५

भद्राषष्ठीपर्वरिक्ताश्च सन्ध्याभौमार्कार्किनाद्यरात्रीश्चतस्रः
गर्भाधानं त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वम्बुपे सत्  ६

केन्द्रत्रिकोणेषु शुभैश्च पापैस्त्र्यायारिगैः पुंग्रहदृष्टलग्ने
ओजांशगेऽब्जेऽपि च युग्मरात्रौ चित्रादितीज्याश्विषु मध्यमं स्यात्  ७

जीवार्कारदिने मृगेज्यनिर्ऋृतिश्रोत्रादितिब्रघ्नभैः
रिक्तामार्करसाष्टवर्ज्यतिथिभिर्मासाधिपे पीवरे
सीमन्तोऽष्टमषष्ठमासि शुभदैः केन्द्रत्रिकोणे खलै
र्लाभारित्रिषु वा ध्रुवान्त्यसदहे लग्ने च पुंभांशके  ८

मासेश्वराः सितकुजेज्यरवीन्दुसौरि
चन्द्रात्मजास्तनुपचन्द्रदिवाकराः स्युः
स्त्रीणां विधोर्बलमुशन्ति विवाहगर्भ
संस्कारयोरितरकर्मसु भर्तुरेव  ९

पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये त्वथ विष्णुपूजा
मासेऽष्टमे विष्णुविधातृजीवैर्लग्ने शुभे मृत्युगृहे च शुद्धे  १०

तज्जातकर्मादि शिशोर्विधेयं पर्वाख्यरिक्तोनतिथौ शुभेऽह्नि
एकादशे द्वादशकेऽपि घस्त्रे मृदुध्रुवक्षिप्रवरोडुषु स्यात्  ११

नार्द्रात्रयश्रुतिमघान्तकमिश्रमूल
त्वाष्ट्रे ज्ञसौरिवसुषड्विरिक्ततिथ्याम्  १२

मासे चेत्प्रथमे भवेत्सदशनो बालो विनश्येत्स्वयं
हन्यात्स क्रमतोऽनुजातभगिनीमात्रग्रजान् द्व्यादिके
षष्ठादौ लभते हि भोगमतुलं तातात्सुखं पुष्टतां
लक्ष्मीं सौख्यमथो जनौ सदशनो वोर्ध्वं स्वपित्रादिहा  १३

दोलारोहेऽर्कभात् पञ्चशरपञ्चेषुसप्तभैः
नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः १४

दन्तार्कभूपधृतिदिङ्मितवासरे स्याद्
द्वारे शुभे मृदुलघुध्रुवभैः शिशूनाम्
दोलाधिरूढिरथ निष्क्रमणं चतुर्थ
मासे गमोक्तसमयेऽर्कमितेऽह्नि वा स्यात् १५

कवीज्यास्तचैत्राधिमासे न पौषे जलं पूजयेत्सूतिका मासपूर्तौ
बुधेन्द्वीज्यवारे विरिक्ते तिथौ हि श्रुतीज्यादितीन्द्वर्कनैर्ऋत्यमैत्रैः १६

रिक्तानन्दाष्टदर्शं हरिदिवसमथो सौरिभौमार्कवारान्
लग्नं जन्मर्क्षलग्नाष्टमगृहलवगं मीनमेषालिकं च
हित्वा षष्ठात्समे मास्यथ हि मृगदृशां पञ्चमादोजमासे
नक्षत्रैः स्यात् स्थिराख्यैः समृदुलघुचरैर्बालकाऽन्नाशनं सत् १७

केन्द्रत्रिकोणसहजेषु शुभैः खशुद्धे लग्ने त्रिलाभरिपुगैश्च वदन्ति पापैः
लग्नाष्टषष्ठरहितं शशिनं प्रशस्तं मैत्राम्बुपानिलजनुर्भमसच्च केचित् १८

क्षीणेन्दुपूर्णचन्द्रेज्यज्ञभौमाऽर्काऽऽर्किभार्गवैः
त्रिकोणव्ययकेन्द्राष्टस्थितैरुक्तं फलं ग्रहैः १९

भिक्षाशी यज्ञकृद्दीर्घजीवी ज्ञानी च पित्तरुक्
कुष्ठी चान्नक्लेशवातव्याधिमान् भोगभागिति २०

पृथ्वीं वराहमभिपूज्य कुजे विशुद्धे
ऽरिक्ते तिथौ व्रजति पञ्चममासि बालम्
बद्धा शुभेऽह्नि काटसूत्रमथ ध्रुवेन्दु
ज्येष्ठर्क्षमैत्रलघुभैरुपवेशयेत्कौ २१

तस्मिन्काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीं च

स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा २२

वारे भौमार्किहीने ध्रुवमृदुलघुभैर्विष्णुमूलादितीन्द्र
स्वातीवस्वभ्युपेतैर्मिथुनमृगसुताकुम्भगोमीनलग्ने
सौम्यैः केन्द्रत्रिकोणैरशुभगगनगैः शत्रुलाभत्रिसंस्थै
स्ताम्बूलं सार्धमासद्वयमितसमये प्रोक्तमन्नाशने वा २३

हित्वैतांश्चैत्रपौषावमहरिशयनं जन्ममासं च रिक्तां
युग्माब्दं जन्मतारामृतुमुनिवसुभिः सम्मिते मास्यथो वा
जन्माहात्सूर्यभूपैः परिमितदिवसे ज्ञेज्यशुक्रेन्दुवारेऽ
थौजाब्दे विष्णुयुग्मादितिमृदुलघुभैः कर्णवेधः प्रशस्तः २४

संशुद्धे मृतिभवने त्रिकोणकेन्द्रत्र्यायस्थैः शुभखचरैः कवीज्यलग्ने
पापाख्यैररिसहजायगेहसंस्थैर्लग्नस्थे त्रिदशगुरौ शुभावहः स्यात् २५

गीर्वाणाऽम्बुप्रतिष्ठापरिणयदहनाधानगेहप्रवेशा
श्चौलं राजाभिषेको व्रतमपि शुभदं नैव याम्यायने स्यात्
नो वा बाल्यास्तवार्धे सुरगुरुसितयोर्नैव केतूदये स्यात्
पक्षं वार्धं च केचिज्जहति तमपरे यावदीक्षां तदुग्रे २६

पुरः पश्चाद् भृगोर्बाल्यं त्रिदशाहं च वार्धकम्
पक्षं पञ्चदिनं ते द्वे गुरोः पक्षमुदाहृते २७

ते दशाहं द्वयोः प्रोक्ते कैश्चित्सप्तदिनं परैः
त्र्यहं त्वात्ययिकेऽप्यन्यैरर्धाहं च त्र्यहं विधोः २८

चूडा वर्षात्तृतीयात्प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी
पर्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम्
वारे लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते
शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः २९

क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वराः
स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया ३०

पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत्
षञ्चवर्षाधिकस्येष्टं गर्भिण्यामपि मातरि ३१

तारादौष्ट्येऽब्जे त्रिकोणोच्चगे वा क्षौरं सत्स्यात्सौम्यमित्रस्ववर्गे
सौम्ये भेऽब्जे शोभने दुष्टतारा शस्ता ज्ञेया क्षौरयात्रादिकृत्ये ३२

ऋतुमत्याः सूतिकायाः सूनोश्चौलादि नाऽऽचरेत्
ज्येष्ठापत्यस्य न ज्येष्ठे कैश्चिन्मार्गेऽपि नेष्यते ३३

दन्तक्षौरनखक्रियाऽत्र विहिता चौलोदिते वारभे
पातंग्याररवीन्विहाय नवमं घस्त्रं च सन्ध्यां तथा
रिक्तां पर्व निशां निरासनरणग्रामप्रयाणोद्यत
स्नाताभ्यक्तकृताशनैर्नहि पुनः कार्या हितप्रेप्सुभिः ३४

क्रतुपाणिपीडमृतिबन्धमोक्षणे क्षुरकर्म च द्विजनृपाज्ञयाऽऽचरेत्
शववाहतीर्थगमसिन्धुमज्ञनक्षुरमाचरेन्न खलु गर्भिणीपति ३५

नृपाणां हितं क्षौरभे श्मश्रुकर्म दिने पञ्चमे पञ्चमेऽस्योदये वा
षडग्निस्त्रिमैत्रोऽष्टकः पञ्चपित्र्योऽब्दतोऽब्ध्यर्यमा क्षौरकृन्मृत्युमेति ३६

गणेशविष्णुवाग्रमाः प्रपूज्य पञ्चमाब्दके
तिथौ शिवार्कदिग्द्विषट्शरत्रिके रवावुदक्
लघुश्रवोऽनिलान्त्यभादितीशतक्षमित्रभे
चरोनसत्तनौ शिशोर्लिपिग्रहः सतां दिने ३७

मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्विकात्रये
गुरुद्वयेऽर्कजीववित्सितेऽह्नि षट्शरत्रिके
शिवार्कदिग्द्विके तिथौ ध्रुवान्त्यमित्रभे परैः

शुभैरधीतिरुत्तमा त्रिकोणकेन्द्रगैः स्मृता  ३८

विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाऽष्टमे
वर्षे वाप्यथ पञ्चमे क्षितिभुजां षष्ठे तथैकादशे
वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद् द्वादशे वत्सरे
कालेऽथ द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः  ३९

क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत्
द्वित्रीषुरुद्ररविदिक्प्रमिते तिथौ च कृष्णादिमत्रिलवकेऽपि न चापराह्ने  ४०

कवीज्यचन्द्रलग्नपा रिपौ मृतौ व्रतेऽधमाः
व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः  ४१

व्रतबन्धेऽष्टषड्रिष्फवर्जिताः शोभनाः शुभाः
त्रिषडाये खलाः पूर्णो गोकर्कस्थो विधुस्तनौ  ४२

विप्राधीशौ भार्गवेज्यौ कुजार्कौ
राजन्यानामोषधीशो विशां च
शूद्राणां ज्ञश्चान्त्यजानां शनिः स्या
च्छाखेशाः स्युर्जीवशुक्रारसौम्याः  ४३

शाखेशवारतनुवीर्यमतीव शस्तं
शाखेशसूर्यशशिजीवबले व्रतं सत्
जीवे भृगौ रिपुगृहे विजिते च नीचे
स्याद्वेदशास्त्रविधिना रहितो व्रतेन  ४४

जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे  ४५

बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः  ४६

स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः
रिष्फाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसन् ४७

कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके
प्राक्सन्ध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे ४८

क्रूरो जडो भवेत्पापः पटुः षट्कर्मकृद्बटुः
यज्ञार्थभाक् तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ४९

विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः
चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान्स्वलवे ५०

राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः
प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्यादिखेचरैः ५१

शुक्रे जीवे तथा चन्द्रे सूर्यभौमाऽर्किसंयुते
निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः ५२

विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ
समस्तवेदविद् व्रती यमांशगेऽतिनिर्घृणः ५३

शुचिशुक्रपौषतपसां दिगश्विरुद्रार्कसङ्ख्यसिततिथयः
भूतादित्रितयाष्टमि सङ्क्रमणं च घ्रतेष्वनध्यायाः ५४

अर्कतर्कत्रितिथिषु प्रदोषः स्यात्तदग्रिमैः
रात्र्यर्धसार्धप्रहरयाममध्यस्थितैः क्रमात् ५५

प्राग्ब्रह्मौदनपाकाद् व्रतबन्धानन्तरं यदि चेत्
उत्पातानध्ययनोत्पत्तावपि शान्तिपूर्वकं तत्स्यात् ५६

वेदक्रमाच्छशिशिवाहिकरत्रिमूलपूर्वासु पौष्णकरमैत्रमृगादितीज्ये

ध्रौवेषु चाश्विवसुपुष्यकरोत्तरेशकर्णे मृगान्त्यलघुमैत्रधनादितौ सत् ५७

नान्दीश्राद्धोत्तरं मातुः पुष्पे लग्नान्तरे न हि
शान्त्या चौलं व्रतं पाणिग्रहः कार्योऽन्यथा न सत् ५८

विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे
छूरिकाबन्धनं शस्तं नृपाणां प्राग्विवाहतः ५९

केशान्तं षोडशे वर्षे चौलोक्तदिवसे शुभम्
व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ६०

इति संस्कारप्रकरणम् ५

## अथ विवाहप्रकरणम् ६

भार्या त्रिवर्गकरणं शुभशीलयुक्ता
शीलं शुभं भवति लग्नवशेन तस्याः
तस्माद्विवाहसमयः परिचिन्त्यते हि
तन्निघ्नतामुपगताः सुतशीलधर्माः १

आदौ सम्पूज्य रत्नादिभिरथ गणकं वेदयेत्स्वस्थचित्तं
कन्योद्वाहं दिगीशानलहयविशिखे प्रश्नलग्नाद्यदीन्दुः
दृष्टो जीवेन सद्यः परिणयनकरो गोतुलाकर्कटाख्यं
वा स्यात्प्रश्नस्य लग्नं शुभखचरयुतालोकितं तद्विदध्यात् २

विषमभांशगतौ शशिभार्गवौ तनुगृहं बलिनौ यदि पश्यतः
रचयतो वरलाभमिमौ यदा युगलभांशगतौ युवतिप्रदौ ३

षष्ठाष्टस्थः प्रश्नलग्नाद्यदीन्दुर्लग्ने क्रूरः सप्तमे वा कुजः स्यात्
मूर्ताविन्दुः सप्तमे तस्य भौमो रण्डा सा स्यादष्टसंवत्सरेण ४

प्रश्नतनोर्यदि पापनभोगः पञ्चमगो रिपुदृष्टशरीरः

नीचगतश्च तदा खलु कन्या सा कुलटा त्वथवा मृतवत्सा ५

यदि भवति सितातिरिक्तपक्षे तनुगृहतः समराशिगः शशाङ्कः
अशुभखचरवीक्षितोऽरिरन्ध्रे भवति विवाहविनाशकारकोऽयम् ६

जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं
सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः
सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा विवाहं स्फुटं
दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ७

प्रश्नलग्नक्षणे यादृशापत्ययुक् स्वेच्छया कामिनी तत्र चेदाव्रजेत्
कन्यका वा सुतो वा तदा पण्डितैस्तादृशापत्यमस्या विनिर्दिश्यते ८

शङ्खभेरीविपञ्चीरवैर्मङ्गलं जायते वैपरीत्यं तदा लक्षयेत्
वायसो वा खरः श्वा शृतालोऽपि वा प्रश्नलग्नक्षणे रौति नादं यदि ९

विश्वस्वातीवैष्णवपूर्वात्रयमैत्रैर्वभ्वाग्नेयैर्वा करपीडोचितऋक्षैः
वस्त्रालङ्कारादिसमेतैः फलपुष्पैः सन्तोष्यादौ स्यादनु कन्यावरणं हि १०

धरणिदेवोऽथवा कन्यकासोदरः शुभदिने गीतवाद्यादिभिः संवृतः
वरवृतिं वस्त्रयज्ञोपवीतादिना ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ११

गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात्
रविशुद्धिवशाच्छुभो वराणामुभयोश्चन्द्रविशुद्धितो विवाहः १२

मिथुनकुम्भमृगाऽलिवृषाजगे मिथुनगेऽपि रवौ त्रिलवे शुचेः
अलिमृगाजगते करपीडनं भवति कार्तिकपौषमधुष्वपि १३

आद्यगर्भसुतकन्ययोर्द्वयोर्जन्ममासभतिथौ करग्रहः
नोचितोऽथ विबुधैः प्रशस्यते चेद् द्वितीयजनुषोः सुतप्रदः १४

ज्येष्ठद्वन्द्वं मध्यमं सम्प्रदिष्टं त्रिज्येष्ठं चेन्नैव युक्तं कदाऽपि
केचित्सूर्यं वह्निगं प्रोज्झ्य चाऽऽहुर्नैवाऽन्योन्यं ज्येष्ठयोः स्याद्विवाहः १५

सुतपरिणयात्षरमासान्तः सुताकरपीडनं
न च निजकुले तद्वद्वा मराडनादपि मुराडनम्
न च सहजयोर्देये भ्रात्रोः सहोदरकन्यके
न सहजसुतोद्वाहोऽब्दार्धे शुभे न पितृक्रिया १६

वध्वा वरस्याऽपि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम्
मासोत्तरं तत्र विवाह इष्यते शान्त्याऽथवा सूतकनिर्गमे परैः १७

चूडा व्रतं चाऽपि विवाहतो व्रताच्चूडा च नेष्टा पुरुषत्रयान्तरे
वधूप्रवेशाच्च सुताविनिर्गमः षरामासतो वाऽब्दविभेदतः शुभः १८

श्वश्रूविनाशमहिजौ सुतरां विधत्तः
कन्याऽसुतौ निऋृतिजौ श्वशुरं हतश्च
ज्येष्ठाभजाततनया स्वधवाग्रजं च
शक्राग्निजा भवति देवरनाशकर्त्री १९

द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा
मूलान्त्यपादसार्पाद्यपादजाते तयोः शुभे २०

वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम्
गरामैत्रं भकूटं च नाडी चैते गुणाधिकाः २१

द्विजा झषालिकर्कटास्ततो नृपा विशोंऽघ्रिजाः
वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः २२

हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजास्तु भक्ष्याः
सर्वेऽपि सिंहस्य वशे विनाऽलिं ज्ञेयं नराणां व्यवहारतोऽन्यत्
कन्यर्क्षाद्वरभं यावत् कन्याभं वरभादपि

गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम्  २४

अश्विन्यम्बुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः
सिंहो वस्वजपाद्भयोः समुदितो याम्यान्त्ययोः कुञ्जरः
मेषो देवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः
स्याद्वैश्वाभिजितोस्तथैव नकुलश्चान्द्राब्जयोन्योरहिः  २५

ज्येष्ठामैत्रभयोः कुरङ्ग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथैवोन्दुरुः
व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुध्न्यर्क्षयो
र्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत्  २६

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ
सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषत्
शेषाश्चास्य समाः कुजस्य सुहृदश्चन्द्रेज्यसूर्याः बुधः
शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ  २७

मित्रे चऽस्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पते
र्मित्राण्यर्ककुजेन्दवो बुधसितौ शत्रू समः सूर्यजः
मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ
मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः  २८

रक्षोनराऽमरगणाः क्रमतो मघाहिवस्विन्द्रमूलवरुणानलतक्षराधाः
मूर्वोत्तरात्रयविधातृयमेशभानि मैत्रादितीन्दुहरिपौष्णमरुल्लघूनि  २९

निजनिजगणमध्ये प्रीतिरत्युत्तमा स्या
दमरमनुजयोः सा मध्यमा सम्प्रदिष्टा
असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो
दनुजविबुधयोः स्याद्वैरमेकान्ततोऽत्र  ३०

मृत्युः षडष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे

द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत्  ३१

प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभो
ऽथो राशीश्वरसौहृदेऽपि गदितो नाडयृक्षशुद्धिर्यदि
अन्यर्क्षेऽशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा
ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः  ३२

मैत्र्यां राशिस्वामिनोरंशनाथद्वन्द्वस्यापि स्याद्गणानां न दोषः
खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम्  ३३

ज्येष्ठारौद्रार्यमाम्भःपतिभयुगयुगं दास्त्रभं चैकनाडी
पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनिबुध्न्ये च मध्या
वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्याद्
दम्पत्योरेकनाडयां परिणयनमसन्मध्यनाडयां हि मृत्युः  ३४

राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव
नाडीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात्  ३५

सेव्याधमर्णयुवतीनगरादिभं चेत्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात्
सेवाविनाशधननाशनभर्तृनाशग्रामादिसौख्यहृदिदंक्रमशः प्रदिष्टम्  ३६

अक्रषटतपयशवर्णाः खगेशमार्जारसिंहशुनाम्
सर्पाऽऽखुमृगावीनां निजपञ्चमवैरिणामष्टौ  ३७

पौष्णेशशाक्राद्रससूर्यनन्दाः पूर्वार्धमध्याऽपरभागयुग्मम्
भर्ता प्रियः प्राग्युजिभे स्त्रियाः स्यान्मध्ये द्वयोः प्रेम परे प्रिया स्त्री  ३८

कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः कविभौमजीवशनिसौरयो गुरुः
इह राशिपाः क्रियमृगास्यतौलिकेन्दुभतो नवांशविधिरुच्यते बुधैः  ३९

समगृहमध्ये शशिरविहोरा     विषमभमध्ये रविशशिनोः सा  ४०

शुक्रज्ञ जीवशनिभूतनयस्य बाण
शैलाष्टपञ्चविशिखाः समराशिमध्ये
त्रिंशांशको विषमभे विपरीतमस्माद्
द्रेष्काणकाः प्रथमपञ्चनवाधिपानाम् ४१

स्याद् द्वादशांश इह राशित एव गेहं
होराऽथ दृक्कनवमांशकसूर्यभागाः
त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः
सौम्यैः शुभं भवति चाऽशुभमेव पापैः ४२

ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनी
पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम्
कर्काल्यण्डजभान्ततोऽर्धघटिका सिंहाश्वमेषादिगा
पूर्णान्ते घटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम् ४३

लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तदा
कर्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा ४४

चन्द्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम्
सौख्यं सापत्न्यवैराग्ये पापद्वययुते मृतिः ४५

जन्मलग्नभयोर्मृत्युशाशौ नेष्टः करग्रहः
एकाधिपत्ये राशीशमैत्र्ये वानैव दोषकृत् ४६

मीनोच्चकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत्
अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ४७

मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्
व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात् ४८

खरामतो ३० ऽन्त्यादितिवह्निपित्र्यभे

खवेदतः ४० के रदत ३२ श्च सार्पभे
खबाणतो ५० ऽश्वे धृतितो १८ ऽर्यमाम्बुपे
कृते२० र्भगत्वाष्ट्रभविश्वजीवभे ४९

मनो १४ द्विदैवानिलसौम्यशाक्रभे
कुपक्षतः २१ शैवकरेऽष्टि १६ तोऽजभे
युगाश्वितो २४ बुध्न्यभतोययाम्यभे
खचन्द्रतो १० मित्रभवासवश्रुतौ ५०

मूलेऽङ्गबाणा ५६ द्विषनाडिकाः कृता
वर्ज्याः शुभेऽथो विषनाडिका ध्रुवाः
निघ्ना भभोगेन खतर्क ६० भाजिताः
स्पष्टा भवेयुर्विषनाडिकास्तथा ५१

गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वे
ऽभिजिदथ च विधाताऽपीन्द्र इन्द्रानलौ च
निर्ऋृतिरुदकनाथोऽप्यर्यमाथो भगः स्युः
क्रमश इह मुहूर्ता वासरे बाणचन्द्राः ५२

शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ
विष्णवर्कत्वाष्ट्रमरुतो मुहूर्ता निशि कीर्तिताः ५३

रवावर्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात्
गुरौ तोयरक्षो भृगौ ब्रह्मपित्र्ये शनावीशसार्पौ मुहूर्ता निषिद्धाः ५४

निर्वेधैः शशिकरमूलमैत्रपित्र्य
ब्राह्मान्त्योत्तरपवनैः शुभो विवाहः
रिक्ताऽमारहिततिथौ शुभेऽह्नि वैश्व
प्रान्त्यांघ्रिः श्रुतितिथिभागतोऽभिजित्स्यात् ५५

वेधोऽन्योन्यमसौ विरिञ्च्यभिजितोर्याम्यानुराधर्क्षयो

विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः
स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोफान्त्ययोः
खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः ५६

शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्त्ते वसु
द्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे मिथः
हस्तोपान्तिमभे विधातृविधिभे मूलादिती त्वाष्ट्रभा
जाङ्घ्री याम्यमघे कृशानुहरिभे विद्धे कुभृद्रेखिके ५७

ऋृत्ताणि क्रूरविद्धानि क्रूरभुक्तादिकानि च
भुक्त्वा चन्द्रेण मुक्तानि शुभार्हाणि प्रचत्तते ५८

ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि
संलत्तयन्तेऽर्कशनीज्यभौमाः सूर्याष्टतर्काग्निमितं पुरस्तात् ५९

हर्षणवैधृतिसाध्यव्यतिपातकगण्डशूलयोगानाम्
अन्ते यन्नत्तत्रं पातेन निपातितं तत्स्यात् ६०

पञ्चास्याजौ गोमृगौ तौलिकुम्भौ कन्यामीनौ कर्क्यली चापयुग्मे
तत्राऽन्योन्यं चन्द्रभान्वोर्निरुक्तं क्रान्तेः साम्यं नो शुभं मङ्गलेषु
व्याघातगण्डव्यतिपातपूर्वशूलान्त्यवज्रे परिघातिगण्डे
योगे विरुद्धे त्वभिजित्समेतः खार्जूरमर्काद्विषमे शशी चेत् ६२

शराष्टदिक्शक्रनगातिधृत्यस्तिथिधृतिश्च प्रकृतेश्च पञ्च
उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम् ६३

पातोपग्रहलत्तासु नेष्टोऽङ्घ्रिः खेटपत्समः
वारस्त्रिघ्नोऽष्टभिस्तष्टः सैकः स्यादर्धयामकः ६४

शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः
रात्रौ निरेकास्तिथ्यंशाः शनौ चान्त्योऽपि निन्दितः ६५

चापान्त्यगे गोघटगे पतङ्गे कर्काजगे स्त्रीमिथुने स्थिते च
सिंहालिगे नक्रधृटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ६६

लग्नाच्चन्द्रान्मदनभवनगे खेटे न स्यादिह परिणयनम्
किं वा बाणाशुगमितलवगे जामित्रं स्यादशुभकरामिदम् ६७

एकार्गलोपग्रहवातलत्ताजामित्रकर्तर्युदयास्तदोषाः
नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा ६८

उपग्रहर्त्तं कुरुबाह्लिकेषु कलिङ्गवङ्गेषु च पातितं भम्
सौराष्ट्रशाल्वेषु च लत्तितं मं त्यजेत्तु विद्धं किल सर्व देशे ६९

शशाङ्कसूर्यर्त्तयुतेर्भशेषे खं भूयुगाङ्गानि दशेशतिथ्यः
नागेन्दवोऽङ्केन्दुमिता नखाश्चेद्भवन्ति चैते दशयोगसञ्ज्ञाः ७०

वाताभ्राग्निमहीपचोरमरणं रुम्बज्रवादाः त्तति
योगाङ्के दलिते समे मनुयुतेऽयौगे तु सैकेऽर्धिते
भं दास्राादथ सम्मितास्तु मनुभी रेखाः क्रमात्संलिखेद्
वेधोऽस्मिन् ग्रहचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः ७१

लग्नेनाढ्या याततिथ्योऽङ्कतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये
रोगो वह्नी राजचौरौ च मृत्युर्बाणश्चायं दात्तिणात्यप्रसिद्धः ७२

रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातां
शकमितिरथ तष्टाऽङ्कैर्यदा षञ्च शेषाः
रुगनलनृपचौरा मृत्युसञ्ज्ञश्च बाणो
नवहृतशरशेषे शेषकैक्ये सशल्यः ७३

रात्रौ चौररुजौ दिवा नरपतिर्वह्निः सदा सन्ध्ययो
मृत्युश्चाथ शनौ नृपो विदि मृतिर्भौमेऽग्निचौरौ रवौ
रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे

वर्ज्याश्च क्रमतो बुधे रुगनलक्ष्मापालचौरा मृतिः ७४

त्र्याशं त्रिकोणं चतुरस्त्रमस्तं पश्यन्ति खेटाश्चरणाभिवृद्ध्या
मन्दो गुरुर्भूमिसुतः परे च क्रमेण सम्पूर्णदृशो भवन्ति ७५

यदा लग्नांशेशो लवमथ तनुं पश्यति युतो
भवेद्वाऽयं वोढुः शुभफलमनल्पं रचयति
लवद्यूनस्वामी लवमदनभं लग्नमदनं
प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम् ७६

लवेशो लवं लग्नपो लग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य
लवद्यूनपोंऽशद्युनं लग्नपोऽस्तं मिथो वेक्षते स्याच्छुभं कन्यकायाः ७७

लवपतिशुभमित्रं वीक्षतेंऽशं तनुं वा
परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम्
मदनलवपमित्रं सौम्यमंशद्युनं वा
तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः ७८

विषुवायनेषु परपूर्वमध्यमान्दिवसांस्त्यजेदितरसङ्क्रमेषु हि
घटिकास्तु षोडश शुभक्रियाविधौ परतोऽपि पूर्वमपि सन्त्यजेद्बुधः ७९

देवद्वयङ्कर्तवोऽष्टाष्टौ नाड्योऽङ्काः खनृपाः क्रमात्
वर्ज्याः सङ्क्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिन्दिताः ८०

घस्त्रे तुलाली बधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा दिवान्धाः
कन्यानृयुक्कर्कटका निशान्धा दिने घटोऽन्त्यो निशि पङ्गुसंज्ञः ८१

बधिरा धन्वितुलालयोऽपराह्णे मिथुनं कर्कटकोऽङ्गना निशान्धाः
दिवसान्धा हरिगोक्रियास्तु कुब्जा मृगकुम्भान्तिमभानि सन्ध्ययोर्हि

दारिद्र्यं बधिरतनौ दिवान्धलग्ने वैधव्यं शिशुमरणं निशान्धलग्ने

पंग्वङ्गे निखिलधनानिनाशमीयुः सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ८३

कार्मुकतौलिककन्यायुग्मलवे झषगे वा
यर्हि भवेदुपयामस्तर्हि सती खलु कन्या ८४

अन्त्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा
नो चरलग्ने चरलवयोगं तौलिमृगस्थे शशभृति कुर्यात् ८५

व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चन्द्रखला न शस्ताः
लग्नेट् कविग्लौश्च रिपौ मृतौ ग्लौर्लग्नेट्शुभाराश्च मदे च सर्वे ८६

त्र्यायाष्टषट्सु रविकेतुतमोऽर्कपुत्रा
स्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः
सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्ट
त्रिद्यूनषड्व्ययगृहान् परिहृत्य शस्तः ८७

पापौ कर्तरिकारकौ रिपुगृहे नीचास्तगौ कर्तरी१
दोषो नैव सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न
भौमेऽस्ते रिपुनीचगे नहि भवेद्भौमोऽष्टमो दोषकृ
न्नीचे नीचनवांशके शशिनि रिःफाष्टारिदोषोऽपि न ८८

अब्दायनर्तुतिथिमासभपक्षदग्ध
तिथ्यन्धकाणबधिराङ्गमुखाश्च दोषाः
नश्यन्ति विद्गुरुसितेष्विह केन्द्रकोणे
तद्वच्च पापविधुयुक्तनवांशदोषः ८९

केन्द्रे कोणे जीव आये रवौ च लग्ने चन्द्रे वाऽपि वर्तोत्तमे वा
सर्वे दोषा नाशमायान्ति चन्द्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः ९०

त्रिकोणे केन्द्रे वा मदनरहिते दोषशतकं
हरेत्सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः

भवेदाये केन्द्रेऽङ्गप उत लवेशो यदि तदा
समूहं दोषाणां दहन इव तूलं शमयति ९१

द्वौ द्वौ ज्ञभृग्वोः पञ्चेन्दौ रवौ सार्धत्रयो गुरौ
रामा मन्दागुकेत्वारे सार्धैकैकं विशोपकाः ९२

श्वश्रूः सितोऽर्कः श्वशुरस्तनुस्तनुर्जामित्रपः स्याद्दयितो मनः शशी
एतद्बलं सम्प्रतिभाव्य तान्त्रिकस्तेषां सुखं सम्प्रवदेद्विवाहतः ९३

कृष्णे पक्षे सौरिकुजार्केऽपि च वारे
वर्ज्ये नक्षत्रे यदि वा स्यात् करपीडा
सङ्कीर्णानां तर्हि सुतायुर्धनलाभ
प्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा ९४

गान्धर्वादिविवाहेऽर्काद्विदनेत्रगुणेन्दवः
कुयुगाङ्गाग्निभूरामास्त्रिपद्यामशुभाः शुभाः ९५

विधोर्बलमवेक्ष्य वा दलनकण्डनं वारकं
गृहाङ्गणविभूषणान्यथ च वेदिकामण्डपान्
विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो
न पूर्वमिदमाचरेत् त्रिनवषण्मिते वासरे ९६

हस्तोच्छ्राया वेदहस्तैः समन्तात्तुल्या वेदी सद्मनो वामभागे
युग्मे घस्त्रे षष्ठहीने च पञ्चसप्ताहे स्यान्मण्डपोद्वासनं सत् ९७

मेषादिराशिजवधूवरयोर्बटोश्च
तैलादिलापनविधौ कथिताऽत्र सङ्ख्या
शैला दिशः शरदिगक्षनगाद्रिबाणा
बाणाक्षबाणगिरयो विबुधैस्तु कैश्चित् ९८

सूर्येऽङ्गनासिंहधटेषु शैवे स्तम्भोऽलिकोदण्डभृगेषु वायौ

मीनाजकुम्भे निर्ऋतौ विवाहे स्थाप्योऽग्निकोणे वृषयुग्मकर्के ९९

नास्यामृक्षं न तिथिकरणं नैव लग्नस्य चिन्ता
नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा
नो वा योगो न मृतिभवनं नैव जामित्रदोषो
गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता १००

पिण्डीभूते दिनकृति हेमन्तर्तौ स्यादर्धास्ते तपसमये गाधूलिः
सम्पूर्णास्ते जलधरमालाकाले त्रेधा योज्या सकलशुभे कार्यादौ १०१

अस्तं याते गुरुदिवसे सौरे सार्के
लग्नान्मृत्यौ रिपुभवने लग्ने चेन्दौ
कन्यानाशस्तनुमदमृत्युस्थे भौमे
वोढुर्लाभे धनसहजे चन्द्रे सौख्यम् १०२

मेषादिगेऽर्केऽष्टशरा नगाक्षाः सप्तेषवः सप्तशरा गजाक्षाः
गोक्षाः खतर्काः कुरसाः कुतर्काः क्वङ्गानि षष्टिर्नवपञ्च भुक्तिः १०३

संक्रान्तियातघस्राद्यैर्मतिर्निघ्नी खषड्६० हृता
लब्धेनांशादिना योज्यं यातर्क्षं स्पष्टभास्करः १०४

तनोरिष्टांशकात् पूर्वं नवांशा दशसंगुणाः
रामाप्ताः लब्धमंशाद्यं तनोर्वर्गादिसाधने १०५

अर्काल्लग्नात्सायनाद्भोग्यभुक्तैर्भागैर्निघ्नात्स्वोदयात्खाग्निभक्तात्
भोग्यं भुक्तं चान्तरालोदयाढ्यं षष्ट्या भक्तं स्वेष्टनाड्यो भवेयुः १०६

चेल्लग्नाऽर्कौ सायनावेकराशौ तद्विश्लेषघ्नोदयः खाग्निभक्तः
स्वेष्टः कालो लग्नमूनं यदाऽर्काद्रात्रेः शेषोऽर्कात्सषड्भान्निशायाम् १०७

उत्पातान्सह पातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा

चन्द्रेज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा
गण्डान्तं च सविष्टिसंक्रमदिनं तन्वंशपास्तं तथा
तन्वंशेशविधूनथाष्टरिपुगान् पापस्य वर्गास्तथा १०८

सेन्दुक्रूरखगोदयांशमुदयास्ताशुद्धिचण्डायुधान्
खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम्
बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षवारोत्थितं
दुष्टं योगमथार्धयामकुलिकाद्यान्वारदोषानपि १०९

क्रूराक्रान्तविमुक्तभं ग्रहणभं यत्क्रूरगन्तव्यभं
त्रेधोत्पातहतं च केतुहतभं सन्ध्योदितं भं तथा
तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान्सन्त्यजे
दुद्वाहे शुभकर्मसु ग्रहकृतान् लग्नस्य दोषानपि ११०

इति विवाहप्रकरणम् ६

अथ वधूप्रवेशप्रकरणम् ७

समाद्रिपञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टिदिनान्तराले
शुभः परस्ताद्विषमाद्बमासदिनेऽक्षवर्षात्परतो यथेष्टम् १

ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले
वधप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः २

ज्येष्ठे पतिज्येष्ठमथाधिके पतिं हन्त्यादिमे भर्तृगृहे वधूः शुचौ
श्वश्रूं सहस्ये श्वशुरं क्षये तनुं तातं मधौ तातगृहे विवाहतः ३

इति वधूप्रवेशप्रकरणम् ७

अथ द्विरागमनप्रकरणम् ८

चरेदथौजहायने घटालिमेषगे रवौ
रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे
नृयुग्ममीनकन्यकातुलावृषे विलग्नके

द्विरागमं लघुध्रुवे चरेऽस्त्रपे मृदूडुनि १

दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्याद्
गच्छेयुर्न हि शिशुगर्भिणीनवोढाः
बालश्चेद्व्रजति विपद्यते नवोढा
चेद्वन्ध्या भवति च गर्भिणी त्वगर्भा २

नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः
नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्न हि ३

पित्र्ये गृहे चेत्कुचपुष्पसम्भवः स्त्रीणां न दोषः प्रतिशुक्रसम्भवः
भृग्वङ्गिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा ४

इति द्विरागमनप्रकरणम् ८

अथाग्न्याधानप्रकरणम् ९

स्यादग्निहोत्रविधिरुत्तरगे दिनेशे
मिश्रध्रुवान्त्यशशिशक्रसुरेज्यधिष्ण्ये
रिक्तासु नो शशिकुजेज्मभृगौ न नीचे
नास्तं गते न विजिते न च शत्रुगेहे १

नो कर्कनक्रझषकुम्भनवांशलग्ने
नोऽब्जे तनौ रविशशीज्यकुजे त्रिकोणे
केन्द्रर्क्षषट्त्रिभवगे च परैस्त्रिलाभ
षट्खस्थितैर्निधनशुद्धियुते विलग्ने २

चापे जीवे तनुस्थे वा मेषे भौमेऽम्बरे द्युने
षट्त्र्यायेऽब्जे रवौ वा स्याज्ज्ञाताग्निर्यजति ध्रुवम् ३

इति अग्निहोत्रप्रकरणम् ९

## अथ राजाभिषेकप्रकरणम्  १०

राजाभिषेकः शुभ उत्तरायणे गुर्विन्दुशुक्रैरुदितैर्बलान्वितैः
भौमार्कलग्नेशदशेशजन्मपैर्नो चैत्ररिक्तारनिशामलिम्लुचे  १

शाक्रश्रवः क्षिप्रमृदुध्रुवोडुभिः शीर्षोदये वोयचये शुभे तनौ
पापैस्त्रिषष्ठायगतैः शुभग्रहैः केन्द्रत्रिकोणायधनत्रिसंस्थितैः  २

पापैस्तनौ रुङ्निधने मृतिः सुते पुत्रार्तिरर्थव्ययगैर्दरिद्रता
स्यात्खेऽलसो भ्रष्टपदो द्युनाम्बुगैः सर्वं शुभं केन्द्रगतैः शुभग्रहैः  ३

गुरुर्लग्नकोणे कुजोऽरौ सितः खे
स राजा सदा मोदते राजलक्ष्म्या
तृतीयायगौ सौरिसूर्यौ खबन्ध्वो
गुरुश्चेद्धरित्री स्थिरा स्यान्नृपस्य  ४

इति राजाभिषेकप्रकरणम्  १०

## अथ यात्राप्रकरणम्  ११

यात्रायां प्रविदितजन्मनां नृपाणां दातव्यं दिवसमबुद्धजन्मनां च
प्रश्नाद्यैरुदयनिमित्तमूलभूतैर्विज्ञाते ह्यशुभशुभे बुधः प्रदद्यात्  १

जननराशितनू यदि लग्नगे तदधिपौ यदि वा तत एव वा
त्रिरिपुखायगृहं यदि वोदयो विजय एव भवेद्वसुधापतेः  २

रिपुजन्मलग्नभमथाधिपौ तयोस्तत एव वोपचयसद्म चेद्भवेत्
हिबुके द्युनेऽथ शुभवर्गकस्तनौ यदि मस्तकोदयगृहं तदा जयः  ३

यदि पृच्छितनौ वसुधा रुचिरा शुभवस्तु यदि श्रुतिदर्शनगम्
यदि पृच्छति चादरतश्च शुभग्रहदृष्टयुतं चरलग्नमपि  ४

विधुकुजयुतलग्ने सौरिदृष्टेऽथ चन्द्रे

मृतिभमदनसंस्थे लग्नगे भास्करेऽपि
हिबुकनिधनहोराद्यूनगे चापि पापे
सपदि भवति भङ्गः प्रश्नकर्तुस्तदानीम् ५

त्रिकोणे कुज्ञात्सौरिशुक्रज्ञजीवा
यदैकोऽपि वा नो गमोऽर्काच्छशी वा
बलीयांस्तु मध्ये तयोर्यो ग्रहः स्यात्
स्वकीयां दिशं प्रत्युताऽसौ नयेच्च ६

प्रश्ने गम्यदिगीशात्खेटः पञ्चमगो यः
बोभूयाद्बलयुक्तः स्वामाशां नयतेऽसौ ७

धनुर्मेषसिंहेषु यात्रा प्रशस्ता शनिज्ञोशनोराशिगे चैव मध्या
रवौ कर्कमीनालिसंस्थेऽतिदीर्घा जनुःपञ्चसप्तत्रिताराश्च नेष्टाः ८

न षष्ठी न च द्वादशी नाऽष्टमी नो सिताद्या तिथिः पूर्णिमाऽमा न रिक्ता
हयादित्यमैत्रेन्दुजीवान्त्यहस्तश्रवोवासवैरेव यात्रा प्रशस्ता ९

न पूर्वदिशि शक्रभे न विधुसौरिवारे तथा
न चाजपदभे गुरौ यमदिशीनदैत्येज्ययोः
न पाशिदिशि धातृभे कुजबुधेऽर्यमर्क्षे तथा
न सौम्यककुभि व्रजेत्स्वजयजीवितार्थी बुधः १०

पूर्वाह्णे ध्रुवमिश्रभैर्न नृपतेर्यात्रा न मध्याह्नके
तीक्ष्णाख्यैरपराह्णके न लघुभैर्नो पूर्वरात्रे तथा
मित्राख्यैर्न च मध्यरात्रिसमये चोग्रैस्तथा नो चरै
रात्र्यन्ते हरिहस्तपुष्यशशिभिः स्यात्सर्वकाले शुभा ११

पूर्वाग्निपित्र्यान्तकतारकाणां भूपप्रकृत्युग्रतुरङ्गमाः स्युः
स्वातीविशाखेन्द्रभुजङ्गमानां नाड्यो निषिद्धा मनुसम्मिताश्च १२

पूर्वार्धमाग्नेयमघानिलानां त्यजेद्धि चित्राहियमोत्तरार्धम्
नृपः समस्तां गमने जयार्थी स्वातीं मघां चोशनसो मतेन १३

तमोभुक्तताराः स्मृता विश्वसङ्ख्याः शुभो जीवपक्षो मृतश्चापि भोग्याः
तदाक्रान्तभं कर्तरीसंभ्रमुक्तं ततोऽक्षेन्दुसङ्ख्यं भवेद्ग्रस्तनाम १४

मार्तण्डे मृतपक्षगे हिमकरश्चेज्जीवपक्षे शुभा
यात्रा स्याद्विपरीतगे क्षयकरी द्वौ जीवपक्षे शुभा
ग्रस्तर्क्षं मृतपक्षतः शुभकरं ग्रस्तात्तथा कर्तरी
यायीन्दुः स्थितिमान् रविर्जयकरौ तौ द्वौ तयोर्जीवगौ १५८

स्वात्यन्तकाहिवसुपौष्णकरानुराधा
दित्यध्रुवाणि विषमास्तिथयोऽकुलाः स्युः
सूर्येन्दुमन्दगुरवश्च कुलाकुला ज्ञो
मूलाम्बुपेशविधिभं दशषड्द्वितिथ्यः १६

पूर्वाश्वीज्यमघेन्दुकर्णदहनद्वीशेन्द्रचित्रास्तथा
शुक्रारौ कुलसंज्ञकाश्च तिथयोऽर्काष्टेन्द्रवेदैर्मिताः
यायी स्यादकुले जयी च समरे स्थायी च तद्वत्कुले
सन्धिः स्यादुभयोः कुलाकुलगणे भूमीशयोर्युध्यतोः १७

स्युर्धर्मे दस्त्रपुष्योरगवसुजलपद्वीशमैत्राण्यर्थे
याम्याजाङ्घ्रीन्द्रकर्णादितिपितृपवनोडून्यथो भानि कामे
वह्न्यार्द्राबुध्न्यचित्रानिर्ऋृतिविधिभगाख्यानि मोक्षेऽथ रोहि
ण्याप्येन्द्वन्त्यर्क्षविश्वार्यमभदिनकरर्क्षाणि पथ्यादिराहौ १८

धर्मगे भास्करे वित्तमोक्षे शशी वित्तगे धर्ममोक्षस्थितः शस्यते
कामगे धर्ममोक्षार्थगः शोभनो मोक्षगे केवलं धर्मगः प्रोच्यते १९

पौषे पक्षत्यादिका द्वादशैवं तिथ्यो माघादौ द्वितीयादिकास्ताः
कामात्तिस्रः स्युस्तृतीयादिवच्च याने प्राच्यादौ फलं तत्र वक्ष्ये २०

सौख्यं क्लेशो भीतिरर्थागमश्च शून्यं नैः स्वं निःस्वता मिश्रता च
द्रव्यक्लेशो दुःखमिष्टाप्तिरर्थो लाभः सौख्यं मङ्गलं वित्तलाभः २१

लाभो द्रव्याप्तिर्धनं सौख्यमुक्तं भीतिर्लाभो मृत्युरर्थागमश्च
लाभः कष्टद्रव्यलाभौ सुखं च कष्टं सौख्यं क्लेशलाभौ सुखं च २२

सौख्यं लाभः कार्यसिद्धिश्च कष्टं क्लेशः कष्टात्सिद्धिरर्थो धनं च
मृत्युर्लाभो द्रव्यलाभश्च शून्यं शून्यं सौख्यं मृत्युरत्यन्तकष्टम् २३

तिथ्यृक्षवारयुतिरद्रिगजाग्नितष्टा
स्थानत्रयेऽत्र वियति प्रथमेऽतिदुःखी
मध्ये धनक्षतिरथो चरमे मृतिः स्यात्
स्थानत्रयेऽङ्कयुजि सौख्यजयौ निरुक्तौ २४

रवेर्भतोऽब्जभोन्मितिर्नगावशेषिता द्व्यगा
महाडलो न शस्यते त्रिषण्मिता भ्रमो भवेत् २५

शशाङ्कभं सूर्यभतोऽत्र गण्यं पक्षादितिथ्या दिनवासरेण
युतं नवाप्तं नगशेषकं चेत्स्याद्धिंवरं तद्गमनेऽतिशस्तम् २६

भूपञ्चाङ्कद्व्यङ्गदिग्वह्निसप्तवेदाष्टेशार्काश्च घाताख्यचन्द्रः
मेषादीनां राजसेवाविवादे वर्ज्यो युद्धाद्ये च नान्यत्र वर्ज्यः २७

आग्नेयत्वाष्ट्रजलपपित्र्यवासवरौद्रभे
मूलब्राह्माजपादर्क्षे पित्र्यमूलाजभे क्रमात् २८

रुषद्व्यग्न्यग्निभूरामद्व्यब्ध्यग्न्यब्धियुगाग्नयः
घातचन्द्रे धिष्ण्यपादा मेषाद्वर्ज्या मनीषिभिः २९

गोस्त्रीझषे धाततिथिस्तु पूर्णा भद्रा नृयुक्कर्कटकेऽथ नन्दा
कौर्प्याजयोर्नक्रधटे च रिक्ता जया धनुःकुम्भहरौ न शस्ताः ३०

नक्रे भौमो गोहरिस्त्रीषु मन्दश्चन्द्रा द्वन्द्वेऽर्कोऽजभे ज्ञश्च कर्के
शुक्रः कोदण्डालिमीनेषु कुम्भे जूके जीवो घातवारा न शस्ताः
मघाकरस्वातिमैत्रमूलश्रुत्यम्बुपान्त्यभम्
याम्यब्राह्मेशसार्पञ्च मेषादेर्घातभं न सत् ३२

भूमिद्व्यब्ध्यद्रिदिक्सूर्याङ्गाष्टाङ्केशाग्निसायकाः
मेषादिघातलग्नानि यात्रायां वर्जयेत्सुधीः ३३

नवभूम्यः शिववह्नयोऽक्षविश्वेऽर्ककृताः शक्ररसास्तुरङ्गतिथ्यः
द्विदिशोऽमावसवश्च पूर्वतः स्युस्तिथयः सम्मुखवामगा न शस्ताः
कौबेरीतो वैपरीत्येन कालो वारेऽर्काद्ये सम्मुखे तस्य पाशः
रात्रावेतौ वैपरीत्येन गण्यौ यात्रायुद्धे सम्मुखे वर्जनीयौ ३५

भानि स्थाप्यान्यब्धिदिक्षु सप्तसप्तानलर्क्षतः
वायव्याग्नेयदिक्संस्थं पारिघं नैव लङ्घयेत् ३६

अग्नेर्दिशं नृप इयान्पुरुहूतदिग्भे
रेवं प्रदक्षिणगता विदिशोऽथ कृत्ये
आवश्यकेऽपि परिघं प्रविलङ्घ्य गच्छे
च्छूलं विहाय यदि दिक्तनुशुद्धिरस्ति ३७

मैत्रार्कपुष्याश्विनभैर्निरुक्ता यात्रा शुभा सर्वदिशासु तज्ज्ञैः
वक्री ग्रहः केन्द्रगतोऽस्य वर्गो लग्ने दिनं चास्य गमेनिषिद्धम् ३८

सौम्यायने सूर्यविधू तदोत्तरां प्राचीं व्रजेत्तौ यदि दक्षिणायने
प्रत्यग्यमाशां च तयोर्दिवानिशं भिन्नायनत्वेऽथ वधोऽन्यथा भवेत् ३९
उदेति यस्यां दिशि यत्र याति गोलभ्रमाद्वाऽथ ककुब्भसङ्घे
त्रिधोच्यते सम्मुख एव शुक्रो यत्रोदितस्तां तु दिशं न यायात् ४०

वक्रास्तनीचोपगते भृगोः सुते राजा व्रजन् याति वशं हि विद्विषाम्
बुधोऽनुकूलो यदि तत्र सञ्चलन् रिपूञ्जयेन्नैव जयः प्रतीन्दुजे ४१

यावच्चन्द्रः पूषभात्कृत्तिकाद्ये पादे शुक्रोऽन्धो न दुष्टोऽग्रदक्षे
मध्येमार्गमार्गवास्तेऽपि राजा तावत्तिष्ठेत्सम्मुखत्वेऽपि तस्य ४२

कुम्भकुम्भांशकौ त्याज्यौ सर्वथा यत्नतो बुधैः
तत्र प्रयातुर्नृपतेरर्थनाशः पदे पदे ४३

अथ मीनलग्न उत वा तदंशके चलितस्य वक्रमिह वर्त्म जायते
जनिलग्नजन्मभपती शुभग्रहौ भवतस्तदा तदुदये शुभो गमः ४४

जन्मराशितनुतोऽष्टमेऽथवा स्वारिभाच्च रिपुभे तनुस्थिते
लग्नगास्तदधिपा यदाऽथवा स्युर्गतं हि नृपतेर्मृतिप्रदम् ४५

लग्ने चन्द्रे वाऽपि वर्गोत्तमस्थे यात्रा प्रोक्ता वाञ्छितार्थैकदात्री
अम्भोराशौ वा तदंशे प्रशस्तं नौकायानं सर्वसिद्धिप्रदायि ४६

द्विग्द्वारभे लग्नगते प्रशस्ता यात्राऽर्थदात्री जयकारिणी च
हानिं विनाशं रिपुतो भयं च कुर्यात्तथादिक्प्रतिलोमलग्ने ४७

राशिः स्वजन्मसमये शुभसंयुतो यो
यः स्वारिभान्निधनगोऽपि च वेशिसञ्ज्ञः
लग्नोपगः स गमने जयदोऽथ भूप
योगैर्गमो विजयदो मुनिभिः प्रदिष्टः ४८

सूर्यः सितो भूमिसुतोऽथ राहुः शनिः शशी ज्ञश्च बृहस्पतिश्च
प्राच्यादितो दिक्षु विदिक्षु चापि दिशामधीशाः क्रमतः प्रदिष्टाः ४९

केन्द्रे दिगधीशे गच्छेदवनीशः
लालाटिनि तस्मिन्नेयादरिसेनाम् ५०

प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः
कर्मस्थोऽथ तमो नवाष्टमगृहे सौरिस्तथा सप्तमे

चन्द्रः शत्रुगृहात्मजेऽपि च बुधः पातालगो गीष्पति
वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः तीर्तिताः ५१

मृगे गत्वा शिवे स्थित्वाऽदितौ गच्छञ्जयेद्रिपून्
मैत्रे प्रस्थाय शाक्रे हि स्थित्वा मूले व्रजंस्तथा ५३

प्रस्थाय हस्तेऽनिलतत्क्षधिष्ण्ये स्थित्वा जयार्थी प्रवसेद् द्विदैवे
वस्वन्त्यपुष्ये निजसीम्नि चैकरात्रोषितः क्ष्मां लभतेऽवनीशः ५३

उषःकालो विना पूर्वां गोधूलिः पश्चिमां विना
विनोत्तरां निशीथः सन् याने याम्यां विनाऽभिजित् ५४

लग्नाद्भावाः क्रमाद्देह१ कोश२ धानुष्क३ वाहनम्
मन्त्रो५ऽरि६मार्ग७आयुश्च८हृद्९व्यापारा१०गम११व्ययाः ५५

केन्द्रे कोणे सौम्यखेटाः शुभाः स्युर्याने पापास्त्र्यायषट्खेषु चन्द्रः
नेष्टो लग्नान्त्यारिरन्ध्रे शनिःखेऽस्ते शुक्रो लग्नेट् नगान्त्यारिरन्ध्रे ५६

योगात्सिद्धिर्धरणिपतीनामृक्षगुणैरपि भूदेवानाम्
चौराणां शुभशकुनैरुक्ता भवति मुहूर्तादपि मनुजानाम् ५७

सहजे रविर्दशमभे शशी तथा शनिमङ्गलौ रिपुगृहे सितः सुते
हिबुके बुधो गुरुरपीह लग्नगः स जयत्यरीन्प्रचलितोऽचिरान्नृपः ५८

भ्रातरि सौरिर्भूमिसुतो वैरिणि लग्ने देवगुरुः
आयगतेऽर्के शत्रुजयश्चेदनुकूलो दैत्यगुरुः ५९

तनौ जीव इन्दुर्मृतौ वैरिगोऽर्कः
प्रयातो महीन्द्रो जयत्येव शत्रून् ६०

लग्नगतः स्याद् देवपुरोधाः

लाभधनस्थैः शेषनभोगैः ६१

द्यूने चन्द्रे समुदयगेऽर्के जीवे शुक्रे विदि धनसंस्थे
ईदृग्योगे चलति नरेशो जेता शत्रून् गरुड इवाहीन् ६२

वित्तगतः शशिपुत्रो भ्रातरि वासरनायः
लग्नगते भृगुपुत्रे स्युः शलभा इव सर्वे ६३

उदये रविर्यदि सौरिररिगः शशी दशमेऽपि
वसुधापतिर्यदि याति रिपुवाहिनी वशमेति ६४

तनौ शनिकुजौ रविर्दशमभे बुधो भृगुसुतोऽपि लाभदशमे
त्रिलाभरिपुभेषु भूसुतशनी गुरुज्ञभृगुजास्तथा बलयुताः ६५

समुदयगे विबुधगुरौ मदनगते हिमकिरणे
हिबुकगतौ बुधभृगुजौ सहजगताः खलखचराः ६६

त्रिदशगुरुस्तनुगो मदने हिमकिरणो रविरायगतः
सितशशिजावपि कर्मगतौ रविसुतभूमिसुतौ सहजे ६७

देवगुरौ वा शशिनि तनुस्थे वासरनाथे रिपुभवनस्थे
पञ्चमगेहे हिमकरपुत्रः कर्मणि सौरिः सुहृदि सितश्च ६८

हिमकिरणसुतो बली चेत्तनौ त्रिदशपतिगुरुर्हि केन्द्रस्थितः
व्ययगृहसहजारिधर्मस्थितो यदि च भवति निर्बलश्चन्द्रमाः ६९

अशुभखगैरनवाष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थः
कविरिह केन्द्रगगीष्पतिदृष्टो वसुचयलाभकरः खलु योगः ७०

रिपुलग्नकर्महिबुके शशिजे परिवीक्षिते शुभनभोगमनैः
व्ययलग्नमन्मथगृहेषु जयः परिवर्जितेष्वशुभनामधरैः ७१

लग्ने यदि जीवः पापा यदि लाभे कर्मण्यपि वा चेद्राज्याधिगमः स्यात्
द्यूने बुधशुक्रौ चन्द्रो हिबुके वा तद्वत्फलमुक्तं सर्वैर्मुनिवर्यैः ७२

रिपुतनुनिधने शुक्रजीवेन्दवो ह्यथ बुधभृगुजौ तुर्यगेहस्थितौ
मदनभवनगश्चन्द्रमा वाऽम्बुगःशशिसुतभृगुजान्तर्गतश्चन्द्रमाः ७३

सितजीवभौमबुधभानुतनूजास्तनुमन्मथारिहिबुकत्रिगृहे चेत्
क्रमतोऽरिसोदरखशात्रवहोराहिबुकायगैर्गुरुदिनेऽखिलखेटैः ७४

सहजे कुजो निधनगश्च भार्गवो मदने बुधो रविररौ तनौ गुरुः
अथ चेत्स्युरिज्यसितभानवो जलत्रिगता हि सौरिरुधिरौ रिपुस्थितौ ७५

एको ज्ञेज्यसितेषु पञ्चमतपःकेन्द्रेषु योगस्तथा
द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः
योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वधं
चाथो क्षेमयशोवनीश्च लभते योगाधियोगे व्रजन् ७६

इषमासि सिता दशमी विजया शुभकर्मसु सिद्धिकरी कथिता
श्रवणर्क्षयुता सुतरां शुभदा नृपतेस्तु गमे जयसन्धिकरी ७७

चेतोनिमित्तशकुनैः खलु सुप्रशस्तै
र्ज्ञात्वा विलग्नबलमुर्व्यधिपः प्रयाति
सिद्धिर्भवेदथ पुनः शकुनादितोऽपि
चेतोविशुद्धिरधिका न च तां विनेयात् ७८

व्रतबन्धनदेवताप्रतिष्ठाकरपीडोत्सवसूतकासमाप्तौ
न कदापि चलेदकालविद्युद्घनवर्षातुहिनेऽपि सप्तरात्रम् ७९

महीपतेरेकदिने पुरात् पुरे यदा भवेतां गमनप्रवेशकौ
भवारशूलप्रतिशुक्रयोगिनीर्विचारयेन्नैव कदापि पण्डितः ८०

यद्येकस्मिन् दिवसे महीपतेर्निर्गमप्रवेशौ स्तः
तर्हि विचार्यः सुधिया प्रवेशकालो न यात्रिकस्तत्र ८१

प्रवेशान्निर्गमं तस्मात्प्रवेशं नवमे तिथौ
नक्षत्रे च तथा वारे नैव कुर्यात्कदाचन ८२

अग्निं हुत्वा देवतां पूजयित्वा नत्वा विप्रानर्चयित्वा दिगीशम्
दत्त्वा दानं ब्राह्मणेभ्यो दिगीशं ध्यात्वा चित्ते भूमिपालोऽधिगच्छेत् ८३

कुल्माषांस्तिलतण्डुलानपि तथा माषांश्च गव्यं दधि
त्वाज्यं दुग्धमथैणमांसमपरं तस्यैव रक्तं तथा
तद्वत्पायसमेव चाषपललं मार्गं च शाशं तथा
षाष्टिक्यं च प्रियंग्वपूपमथवा चित्राण्डजान् सत्फलम् ८४

कौर्मं सारिकगोधिकं च पललं शाल्यं हविष्यं हया
द्यृक्षे स्यात्कृसरान्नमुद्गमपि वा पिष्टं यवानां तथा
मत्स्यान्नं खलु चित्रितान्नमथवा दध्यन्नमेवं क्रमा
द्भक्ष्याभक्ष्यमिदं विचार्य मतिमान् भक्षेत्तथाऽऽलोकयेत् ८५

आज्यं तिलोदनं मत्स्यं पयश्चापि यथाक्रमम्
भक्षयेद्दोहदं दिश्यमाशां पूर्वादिकां व्रजेत् ८६

रसालां पायसं काञ्जीं शृतं दुग्धं तथा दधि
पयोऽशृतं तिलान्नं च भक्षयेद्वारदोहदम् ८७

पक्षादितोऽर्कदलतण्डुलवारिसर्पिः
श्राणा हविष्यमपि हेमजलं त्वपूपम्
भुक्त्वा व्रजेद्रुचकमम्बु च धेनुमूत्रं
यावान्नपायसगुडानसृगन्नमुद्गान् ८८

उद्धृत्य प्रथमत एव दक्षिणांध्रिं द्वात्रिंशत्पदमधिगत्य दिश्ययानम्

आरोहेत्तिलघृतहेमताम्रपात्रं दत्त्वाऽऽदौ गणकवराय च प्रगच्छेत्  ८९

प्राच्यां गच्छेद्गजेनैव दक्षिणस्यां रथेन हि
दिशि प्रतीच्यामश्वेन तथोदीच्यां नरैर्नृपः  ९०

देवगृहाद्वा गुरुसदनाद्वा स्वगृहान्मुख्यकलत्रगृहाद्वा
प्राश्य हविष्यं विप्रानुमतः पश्यन् शृणवन्मङ्गलमेयात्  ९१

कार्याद्यैरिह गमनस्य चेद्विलम्बा भूदेवादिभिरुपवीतमायुधं च
क्षौद्रं चामलफलमाशु चालनीयं सर्वेषां भवति यदेव हृत्प्रियं वा  ९२

गेहाद्गेहान्तरमपि गमस्तर्हि यात्रेति गर्गः
सीम्नः सीमन्तरमपि भृगुर्बाणविक्षेपमात्रम्
प्रस्थानं स्यादिति कथयतेऽथो भरद्वाज एवं
यात्रा कार्या बहिरिह पुरात्स्याद्वसिष्ठो ब्रवीति  ९३

प्रस्थानमत्र धनुषां हि शतानि पञ्च
केचिच्छतद्वयमुशन्ति दशैव चान्ये
सम्प्रस्थितो य इह मन्दिरतः प्रयातो
गन्तव्यदिक्षु तदपि प्रयतेन कार्यम्  ९४

प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नैकत्र तिष्ठेत्
सामन्तः सप्तरात्रं तदितरमनुजः पञ्चरात्रं तथैव
ऊर्ध्वं गच्छेच्छुभाहेऽप्यथ गमनदिनात्सप्तरात्राणि पूर्वं
चाशक्तौ तद्दिनेऽसौ रिपुविजयमना मैथुनं नैव कुर्यात्  ९५

दुग्धं त्याज्यं पूर्वमेव त्रिरात्रं क्षौरं त्याज्यं पञ्चरात्रं च पूर्वम्
क्षौद्रं तैलं वासरेऽस्मिन्वमिश्च त्याज्यं यत्नाद्भूमिपालेन नूनम्  ९६

भुक्त्वा गच्छति यदि चेत्तैलनुडक्षारपक्वमांसानि
विनिवर्तते स रुग्णः स्त्रीद्विजमवमान्य गच्छतो मरणम्  ९७

यदि मास्सु चतुर्षु पौषमासादिषु वृष्टिर्हि भवेदकालवृष्टिः
पशुमर्त्यपदाङ्किता न यावद्वसुधा स्यान्न हि तावदत्र दोषः ९८

अल्पायां वृष्टौ दोषोऽल्पो भूयस्यां दोषो भूयान्
जीभूतानां निर्घोषे वृष्टौ वा जातायां भूपः
सूर्येन्द्वोर्बिम्बे सौवर्णे कृत्वा विप्रेभ्यो दद्याद्
दुःशाकुन्ये साज्यं स्वर्णं दत्वा गच्छेत्स्वेच्छाभिः ९९

विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं
वेश्यावाद्यमयूरचाषनकुला बद्धैकपश्वामिषम्
सद्वाक्यं कुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यका
रत्नोष्णीषसितोक्षमद्यसमुतस्त्रीदीप्तवैश्वानराः १००

आदर्शाञ्जनधौतवस्त्ररजका मीनाज्यसिंहासनं
शावं रोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम्
भारद्वाजनृयानवेदनिनदा माङ्गल्यगीताङ्कुशा
दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः १०१

बन्ध्या चर्म तुषास्थि सर्पलवणाङ्गारेन्धनक्लीबविट्
तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः
नग्नाभ्यक्तविमुक्तकेशपतिता व्यङ्गश्रुधार्ता असृक्
स्त्रीपुष्पं सरठः स्वगेहदहनं मार्जारयुद्धं क्षुतम् १०२

काषायी गुडतक्रपङ्कविधवाकुब्जाः कुटुम्बे कलि
र्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च
कार्पासं वमनं च गर्दभरवो दक्षोऽतिरुट् गर्भिणी
मुण्डार्द्राम्बरदुर्वचोऽन्धबधिरोदक्यो न दृष्टाः शुभाः १०३

गोधाजाहकसूकराहिशशकानां कीर्तनं शोभनं
नो शब्दो न विलोकनं च कपिऋक्षाणामतो व्यत्ययः
नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे

व्यत्यस्ताः शकुना नृपेक्षणविधौ यात्रोदिताः शोभनाः १०४

वामाङ्गे कोकिला पल्ली पोतकी सूकरी रला
पिङ्गला छुच्छुका श्रेष्ठाः शिवाः पुरुषसंज्ञिताः १०५

छिक्करः पिक्कको भासः श्रीकराठो वानरो रुरुः
स्त्रीसंज्ञकाः काकऋक्षश्वानः स्युर्दक्षिणाः शुभाः १०६

प्रदक्षिणगताः श्रेष्ठा यात्रायां मृगपक्षिणः
ओजा मृगा व्रजन्तोऽतिधन्या वामे खरस्वनः १०७

आद्येऽपशकुने स्थित्वा प्राणानेकादश व्रजेत्
द्वितीये षोडश प्राणांस्तृतीये न क्वचिद्व्रजेत् १०८

यात्रानिवृत्तौ शुभदं प्रवेशनं मृदुध्रुवैः क्षिप्रचरैः पुनर्गमः
द्वीशेऽनले दारुणभे तथोग्रभे स्त्रीगेहपुत्रात्मविनाशनं क्रमात् १०९

अयनर्क्षमासतिथिकालवासरोद्भवशूलसम्मुखसितज्ञदिक्पाः
गुरुवक्रतादिपरिघाख्यदराडकस्त्र्यृतुजाद्यशौचमयि चोत्सवादिकम्
मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्च सौरिरविभौमवासराः
अपि वामपृष्ठगविधुस्तथाडलोवसुपञ्चकाभिजिदथापि दक्षिणे १११

लग्ने जन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्च षष्ठं तदीशा
वा लग्ने कुम्भमीनर्क्षनवलवतनू चापि पृष्ठोदयं च
पृष्ठाशासंस्थमृक्षं दशमशनिरथो सप्तमे चापि काव्यः
केन्द्रे वक्राश्च वक्रिग्रहदिवसविवाहोक्तदोषाश्च नेष्टाः ११२

इति यात्राप्रकरणम् ११

## अथ वास्तुप्रकरणम् १२

यद्भं द्व्यङ्कसुतेशदिङ्मितमसौ ग्रामः शुभो नामभात्

स्वं वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम्
काकिरायस्त्वनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थ
दोऽथ द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः १

गोसिंहनक्रमिथुनं निवसेन्न मध्ये
ग्रामस्य पूर्वककुभोऽलिझषाङ्गनाश्च
कर्को धनुस्तुलभमेषघटाश्च तद्वद्०
वर्गाः स्वपञ्चमपरा बलिनः स्युरैन्द्र्याः २

एकोनितेष्टर्ज्ञहता द्वितिथ्यो रूपोनितेष्टायहतेन्दुनागैः
युक्ता घनैश्चापि युता विभक्ता भूपाश्विभिः शेषमितो हि पिराडः ३

स्वेष्टायनज्ञत्रभवोऽथ दैर्ध्यहृत्स्याद्विस्तृतिर्विस्तृतिहृच्च दीर्घता
आया ध्वजो धूमहरिश्वगोखरेभध्वाङ्क्षकाः पिराड इहाष्टशेषिते ४

ध्वजादिकाः सर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्वयमोत्तरे तथा
प्राच्यां वृषे प्राग्यमयोर्गजेऽथवा पश्चादुदक्पूर्वयमे द्विजादितः ५

गृहेशतत्स्त्रीसुतवित्तनाशोऽर्केन्द्वीज्यशुक्रे विबलेऽस्तनीचे
कर्तुःस्थितिर्नो विधुवास्तुनोर्भे पुरःस्थिते पृष्ठगते खनिः स्यात् ६

भं नागतष्टं व्यय ईरितोऽसौ ध्रुवादिनामाज्ञरयुक् सपिराडः
तष्टो गुणैरिन्द्रकृतान्तभूया ह्यंशा भवेयुर्न शुभोऽन्तकोऽत्र ७

दिज्ञु पूर्वादितः शालाध्रुवा भूद्वौ कृता गजाः
शालाध्रुवाङ्कसंयोगः सैको वेश्म ध्रुवादिकम् ८

तिथ्यर्काष्टाष्टिगोरुद्रशक्रे नामाज्ञरं त्रयम्
भूद्व्यब्धीष्वङ्गदिग्वह्निविश्वेषु द्वौ नगेऽब्धयः ९
ध्रुवधान्ये जयनन्दौ खरकान्तमनोरमसुमुखदुर्मुखोग्रं च
रिपुदं वित्तदनाशे चाक्रन्दविपुलविजयाख्यं स्यात् १०

पिण्डे नवाङ्काङ्गगजाग्निनागनागाब्धिनागैर्गुणिते क्रमेण
विभाजिते नागनगाङ्कसूर्य नागर्च्चतिथ्यृच्चखभानुभिश्च  ११

आयो वारोंऽशको द्रव्यमृणमृच्चं तिथिर्युतिः
आयुश्चाथऽगृहेशर्च्चगृहभैक्यं मृतिप्रदम्  १२

गेहाद्यारम्भेऽर्कभाद्वत्सशीर्षे रामैर्दाहो वेदभैरग्रपादे
शून्यं वेदैः पृष्ठपादे स्थिरत्वं रामैः पृष्ठे श्रीर्युगैर्दच्चकुच्चौ  १३

लाभो रामैः पुच्छगैः स्वामिनाशो वेदैर्नैःस्वं वामकुच्चौ मुखस्थैः
रामैः पीडा सन्ततं वार्कधिष्ण्यादश्वै रुद्रैर्दिग्भिरुक्तं ह्यसत्सत्  १४

कुम्भेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्कयोः
पौषे नक्रे च याम्योत्तरमुखसदनं गोजगेऽर्के च राधे
मार्गे जूकालिगे सद् ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः
सूतीगेहं त्वदित्यां हरिभविधिभयोस्तत्र शस्तः प्रवेशः  १५

कैश्चिन्मेषरवौ मधौ वृषभगे ज्येष्ठे शुचौ कर्कटे
भाद्रे सिंहगते घटेऽश्वयृजि चोर्जेऽलौ मृगे पौषके
माघे नक्रघटे शुभं निगदितं गेहं तथोर्जो न सन्
कन्यायां च तपा धनुष्यपि न सन्कृष्णादिमासाद्भवेत्  १६

पूर्णेन्दुतः प्राग्वदनं नवम्यादिषूत्तरास्यं त्वथ पश्चिमास्यम्
दर्शादितः शुक्लदले नवम्यादौ दच्चिणास्यं न शुभं वदन्ति  १७

भौमार्करिक्तामाद्यूने चरोनेऽङ्गे विपञ्चके
व्यष्टान्त्यस्थैः शुभैर्गेहारम्भस्त्र्यायारिगैः खलैः  १८

देवालये गेहविधौ जलाशये राहोर्मुखं शम्भुदिशो विलोमतः
मीनार्कसिंहार्कमगार्कतस्त्रिभे खाते मुखात् पृष्ठविदिक्शुभा भवेत्  १९

कूपे वास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः
सूनोर्नाशःस्त्रीविनाशो मृतिश्च सम्पत् पीडा शत्रुतःस्याच्च सौख्यम्  २०

स्नानाग्निपाकशयनास्त्रभुजेश्च धान्य
भाण्डारदैवतगृहाणि च पूर्वतः स्युः
तन्मध्यतस्तु मथनाज्यपुरीषविद्या
भ्यासाख्यरोदनरतौषधसर्वधाम  २१

जीवार्कविच्छुक्रशनैश्चरेषु लग्नारिजामित्रसुखत्रिगेषु
स्थितिः शतं स्याच्छरदां सितार्किरिज्ये तनुत्र्यङ्गसुते शते द्वे  २२

लग्नाम्बरायेषु भृगुज्ञभानुभिः
केन्द्रे गुरौ वर्षशतायुरालयः
बन्धौ गुरुर्व्योम्नि शशी कुजार्कजौ
लाभे तदाऽशीतिसमायुरालयः  २३

स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगतेऽथवा
शनौ स्वोच्चे लाभगे वा लक्ष्म्या युक्तं चिरं गृहम्  २४

द्यूनाम्बरे यदैकोऽपि परांशस्थो ग्रहो गृहम्
अब्दान्तः परहस्तथं कुर्याच्चेद्वर्गपोऽबलः  २५

पुष्यध्रुवेन्दुहरिसर्पजलैः सजीवै
स्तद्वासरेण च कृतं सुतराज्यदं स्यात्
द्वीशाश्वितक्षवसुपाशिशिवैः सशुक्रै
र्वारे सितस्य च गृहं धनधान्यदं स्यात्  २६

सारैः करेज्यान्त्यमघाम्बुमूलैः
कौजेऽह्नि वेश्माग्निसुतार्तिदं स्यात्
सज्ञैः कदास्त्रार्यमतक्षहस्तै
र्ज्ञस्यैव वारे सुखपुत्रदं स्यात्  २७

अजैकणदहिर्बुध्न्यशक्रमित्रानिलान्तकैः
समन्दैर्मन्दवारे स्याद्रक्षोभूतयुतं गृहम्  २८

सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभै
र्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भेवेत्
देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः
सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम्  २९

इति वास्तुप्रकरणम्  १२

अथ गृहप्रवेशप्रकरणम्  १३

सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे
यत्रानिवृतौ नृपतेर्नवे गृहे
स्याद्वेशनं द्वाःस्थमृदुध्रुवोऽडुभि
र्जन्मर्क्षलग्नोपचयोदये स्थिरे  १

जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयोः श्रावणिकेऽपि सन् स्यात्
वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणाऽत्र  २

मृदु ध्रुवक्षिप्रचरेषु मूलभे वास्त्वर्चनं भूतबलिं च कारयेत्
त्रिकोणकेन्द्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः  ३

शुद्धाम्बुरन्ध्रे विजनुर्भमृत्यौ व्यर्कारिरिक्ताचरदर्शचैत्रे
अग्रेऽम्बुपूर्णं कलशं द्विजांश्च कृत्वा विशेद्वेश्म भकूटशुद्धम्  ४

वामो रविमृत्युसुतार्थलाभतोऽ
र्के पञ्चभे प्राग्वदनादिमन्दिरे
पूर्णे तिथौ प्राग्वदने गृहे शुभो
नन्दादिके याम्यजलोत्तरानने  ५

वक्त्रे भू रविभात्प्रवेशसमये कुम्भेऽग्निदाहः कृताः

प्राच्यामुद्वसनं कृता यमगता लाभः कृताः पश्चिमे
श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे
रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ६

एवं सुलग्ने स्वगृहं प्रविश्य
वितानपुष्पश्रुतिघोषयुक्तम्
शिल्पज्ञदैवज्ञविधिज्ञपौरान्
राजाऽर्चयेद्भूमिहिरण्यवस्त्रैः ७

इति मुहूर्तचिन्तामणौ गृहप्रवेशप्रकरणम् १३

अथ ग्रन्थकारवंशवर्णनम्

आसीद्धर्मपुरे षडङ्गनिगमाध्येतृद्विजैर्मण्डिते
ज्योतिर्वित्तिलकः फणीन्द्ररचिते भाष्ये कृतातिश्रमः
तत्तज्ञातकसंहितागणितकृन्मान्यो महाभूभुजां
तर्कालंकृतिवेदवाक्यविलसद्बुद्धिः स चिन्तामाणः १

ज्योतिर्विद्गणवन्दितांघ्रिकमलस्तत्सूनुरासीत्कृती
नाम्नाऽनन्त इति प्रथामधिगतो भूमण्डलाहस्करः
यो रम्यां जनिपद्धतिं समकरोद्दुष्टाशयध्वंसिनीम्
टीकां चोत्तमकामधेनुगणितेऽकार्षीत्सतां प्रीतये २

तदात्मज उदारधीर्विबुधनीलकण्ठानुजो
गणेशपदपङ्कजं हृदि निधाय रामाभिधः
गिरोशनगरे वरे भुजभुजेषुचन्द्रैर्मिते
शके विनिरमादिमं खलु मुहूर्तचिन्तामणिम् ३

समाप्तश्चायं ग्रन्थः